तत्र जातिविशेषलक्षणं प्रथमाह्निकार्थः। तद्विभागार्थं सूत्रम्—**साधर्म्ये**त्यादि[1]। यद्यपि समोत्तरं हेतुतो नोत्कृष्टं तथाऽपि तेन समीकरिष्यामीति प्रयोगः समः,

---

व्याप्तेः, हेत्वाभासाश्च यथोक्ताः[2] इति तेषामपि तथात्वात्। अन्ये तु अध्यायार्थस्यातिप्रसक्तत्वेऽपि तेन रूपेण तत्रैव विशेषाभिधाने तात्पर्यम्; नहि ज्ञानप्रकारो यावति, स सर्वस्तस्यार्थः, 'गाः पश्ये'ति वाक्यस्य सन्निहितगोप्रत्यायकस्य व्यवहितावोधकतया व्यभिचारात् तात्पर्यविशेषान्नियम इति तुल्यं तादृशे चार्थे सूत्रकृत्तात्पर्यं "कृतिविशेषोन्नेयमिति[3] समादधिरे। तदपि न, कृतिविशेषोन्नेयतात्पर्यविशेषस्य नियामकत्वावश्यकत्वे पदार्थलक्षणस्यैवाध्यायार्थत्वप्राप्तेः, निरुक्ताध्यायार्थापेक्षया तस्य लघुत्वात्। तस्मादेवं वक्तव्यम्, 'अनन्यपरोद्दिष्टरूपवत्' कथकाशक्तिलिङ्गविशेषलक्षणं पञ्चमाध्यायार्थः। प्रथमञ्छलपरीक्षोपोद्घातेन तद्विशेषलक्षणात् छलपरीक्षायाश्च शिष्ययोग्यतापरत्वेन[4] टीकाकृताऽवतारितत्वात्। एवं हि हेत्वाभासानां निग्रहस्थानविशेषत्वेनात्रत्यानामपि करिष्यमाणाध्यायत्रयपरीक्षार्थप्रचुरप्रयोगशालितया परीक्षाप्रयोजनत्वेनैव प्रथमं लक्षणम्। न चैवं निग्रहस्थानान्तराणामपि तदुपयोगात्तत्रैव व्युत्पादनप्रसङ्गः। द्वयी हि परीक्षा, कथारूपा स्वयंपरामर्शरूपा च। तत्र हेत्वाभासानां स्वपरकर्तृकपरीक्षामात्रोपयोगेन प्राधान्यान्निग्रहस्थानान्तराणां च कथारूपपरीक्षैकनियमात् तन्मात्रमपि जातिसामान्यलक्षणातिव्यापि, कथकाशक्तिलिङ्गनिग्रहस्थानविशेषनिरनुयोज्यानुयोगविशेषवत्त्वाज्जातेरिति, तदर्थं'मुद्दिष्टरूपवदि'ति विशेषणम्, येन रूपेण प्रथमसूत्रेणोद्देशः तद्विशेषलक्षणस्य विवक्षितत्वात्। तच्च जातिविशेषलक्षणं निग्रहस्थानविशेषलक्षणमिति च द्वयम्, निरनुयोज्यानुयोगस्य तु तेन रूपेण नाऽऽद्यसूत्रोद्देश इति सर्वमवदातम्।

तत्रेति ॥ निग्रहस्थानापेक्षया जातीनामनुद्भटापराधतया प्रचुरसम्भावनत्वादिति भावः। समपदान्तानामन्वर्थताव्युत्पादनद्वारेण जातिसामान्यलक्षणमवतारयितुमाह—यद्यपीति ॥

---

1. Vide, NS. 5. 1. 1, साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्ध्यनित्यनित्यकार्यसमाः।

Vātsyāyana, साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति संक्षेपेणोक्तं तद् विस्तरेण विभज्यते। ताः खल्विमा जातयः, स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः, *NBh.* 5. 1. 1.

2. Cp. क्रमप्राप्ते हेत्वाभासलक्षणे वक्तव्ये तदकथने बीजमाह—हेत्वा......क्ताः, *NSV.* 5. 2. 25.

3. MS. ॰विशेषान्नेयमिति. 4. MS. ॰योग्यापर॰.

तादर्थ्यात्तदभिप्रायपूर्वकत्वाद्वेत्याचार्यः । यदूचे—"समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः"[1]—इति । एतेन बुद्धिपूर्वको जातिप्रयोगः साम्यापादनायेति सूचितं भवति । यदि ह्ययं जात्युत्तरेणाऽऽकुलीकृतो निष्प्रतिभः स्यात् असद्वा ब्रूयात्तदा समनिरनुयोज्यानुयोगवदेतस्यापि पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो वा स्यादिति समौ स्यावः, अन्यथा त्वहमेवापकृष्टः स्यामिति बुद्ध्या प्रवृत्तेरिति । भाष्यकारस्तु प्रयोगगतं विशेषहेत्वभावं साम्यमाह । यदवोचत्—"साधर्म्येण प्रत्यवस्थानमविशिष्यमाणम्"[2]—इति । यथा हि त्वदुपन्यस्तं साधर्म्यं तथा मदुक्तमपि, यथेदं वैधर्म्यं तथेदमपि, [3]यथेदमेतत्सहचरितमुपलब्धं तथेदमपीत्याकारेण जातिवादिनः प्रत्यवस्थानात्, तेन प्रत्यवस्थानस्वरूपं सर्वजातिसाधारणं सूचितम् । एतच्च तत्र तत्र वक्ष्यते ॥

अन्ये तु वक्तृधर्मं वचन उपचरन्ति । जातिवादी हि समः साधारणो नोत्-

---

हेतोः [4]स्थापनावाद्युक्तत्वादित्यर्थः । उपचारबीजमाह—तादर्थ्यादिति ॥ समीकरणं प्रयोगकार्यमतः कार्यवाचकः सम-शब्दः कारणे उपचरितः । 'तदभिप्रायपूर्वकत्वादि'त्यनेन जातिप्रयोगकारणं समीकरणाभिप्रायमिति कारणशब्दस्य कार्ये उपचार इत्युक्तम् । तादर्थ्ये संवादमाह—यदूच इति ॥ 'तदभिप्रायपूर्वकत्वादि'ति व्याचष्टे—यदि हीति ॥ तेन साम्यापादननियतबुद्धिपूर्वकमुत्तरं जातिसामान्यलक्षणमुक्तं भवति । नन्वेतदबुद्धिपूर्वकजात्यव्यापकम्, अथाज्ञायमाने तथाभावदशायामपि कदाचित्तदुपाधिमत्त्वमस्त्येव, तथाऽपि मतानुज्ञायामतिव्यापकमिति [5]पूर्वापरितोषेण मतान्तरमाह—भाष्यकारस्त्विति ॥ 'साधर्म्येणे'त्युपलक्षणम्, अत एवाऽऽह—अविशिष्यमाणमिति ॥ तेन दूष्यसाम्यपुरस्कारेण प्रत्यवस्थानं जातिरित्यर्थः । तदेव साधर्म्यवैधर्म्ययोर्दर्शयित्वा उत्कर्षसमे दर्शयति—यथेदमेतदिति ॥ सतोऽपि विशेषस्यापुरस्कारात् 'सदुत्तरमप्युक्तिदोषेण जाति'रिति सिद्धमित्यर्थः ।

नन्वेतदपि यत्राविशेषं नोदाहरति तत्राव्यापकमित्यत आह—अन्ये त्विति ॥ वक्तुः समत्वमापाद्य उत्तरे योजयति—जातिवादीति ॥ सम-पदं लोकेऽपकृष्टवाच्यपि

---

1. Cp. Uddyotakara, समीकरणार्थं प्रयोगः समः, साधर्म्यमेव समं वैधर्म्यमेव सममिति, समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः, *NV.* 5. 1. 1.

2. Vide, साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः, *NBh.* 5. 1. 1.

3. MS. यथेदं तत्०. 4. MS. स्थाना०. 5. MS. ०शेषेण.

कृष्टोऽपकृष्ट इत्यर्थः। स च साधर्म्याद्युत्तरद्वारैवोन्नीयत इति उत्तरमेव सममपकृष्ट-मित्यर्थः। तच्चापकृष्टमुत्तरं द्वेधा भवति दूषणसमर्थमप्यसिद्धं सिद्धमपि दूषणासमर्थम्। प्रथममपि कल्पितदूष्यं यत्तच्छलमुक्तम् अकल्पितदूष्यन्तु केवलनिरनुयोज्यानुयोगो वक्ष्यते, शेषं जातिरित्यनेन सामान्यलक्षणं सूचितं भवति। तथाच वार्त्तिकम्—"जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिषेधासमर्थो हेतुः"[1]—इति। वयं तु ब्रूमः, तत् त्रयम्, चतुर्थश्चायमर्थः यज्जात्युत्तरं परसाधनमिव स्वात्मानमपि व्याप्नोतीत्यतः स्वपरसाम्यात् सममित्युच्यते। तथाच, स्वात्मव्याघातकत्वं नाम

---

दृष्टम्, यथा साधारणमद्य दिनमिति; साधारणपदञ्च समपर्यायतया स्थितमिति तस्यापकर्षे प्रयोग इत्यर्थः। नन्वपकृष्टोत्तरत्वं छलातिव्यापीत्यतो विवेचयति—तच्चेति ॥ कल्पित-दूष्यमिति ॥ ननु हेत्वसिद्धिमुद्भाव्य तत्सिद्धये प्रमाणमाशङ्क्य दूषणात्मककार्यसमाति-व्यापकमेतत्, न; वचनार्थतया कल्पितमित्यर्थात्। केवलेति ॥ यत्र दूषणसमर्थमविद्यमान-मारोप्यते, स शुद्धो निरनुयोज्यानुयोग इत्यर्थः। शेषमिति ॥ यत्र नियमानपेक्षप्रतिधर्म-प्रतिहतत्वादिकं विद्यमानमेव दूषणासमर्थं दूषणत्वेनाऽऽरोप्यते सा जातिरित्यर्थः। तदेतद् भाष्यवार्त्तिकटीकाकृतां मतमयुक्तम्। तथा ह्याद्यं यत्किञ्चिद्वादरूपार्थान्तरेऽतिव्यापकम्; द्वितीयमपि 'शब्दो नित्यः अस्मदादिवाह्यकरणप्रत्यक्षत्वात्' इत्यत्राव्यभिचारिविशिष्टैक[2]-देशे व्याप्यत्वाभिमतेऽतिव्यापकम्; तृतीयं तु जातिर्न नित्येत्यादि, क्षित्यादि कार्यं सावयव-त्वादित्यस्यावयवसमवेतत्वादित्यर्थः, स चावयवसामान्यव्यभिचारीति छलविशेषातिव्यापि। न चाविभागः समीचीनः, सिद्धस्यापि कल्पितदूष्यस्य च्छलत्वादसिद्धस्यापि दूषणसमर्थस्य जातित्वात्; यथा यदि घटसाधर्म्यादनित्यः शब्दः नित्यसाधर्म्यान्निष्क्रियत्वात् नित्य एव किन्न स्यादित्यतः पूर्वापरितोषेणाऽऽह—वयं तु ब्रूम इति ॥ पूर्वत्रये यद्यपरितोषः कथं तर्हि 'तत्त्रयमि'ति न वाच्यं समपदान्तानामन्वर्थतावीजतामात्राभ्यनुज्ञानात्। यद्वा, वार्त्तिककारादीनामुदाहरणत्वेनैतत्त्रयमयन्तु चतुर्थो लक्षणत्वेन सूत्रकारतात्पर्यविषय इत्यर्थः। [3]स्वात्मव्याघातकत्वमिति ॥ ननु व्याघातकमुत्तरं जातिरित्यस्य प्रतिपाद्यत्वोद्देश्य-दोषप्रयोजकत्वाभिमतप्रतिपादकवाक्यमुत्तरमिति पर्यवसितोऽर्थः। एतच्च सालम्बनानुमान-प्रतिपक्षतयोपन्यस्ते निरालम्बनमिदं वस्तुत्वादित्यत्रेदमनुमानमनैकान्तिकमनुमानत्वादित्यत्र

---

1. Cp. अत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिरोधासमर्थो हेतुः, *NV*. 5. 1. 1. प्रतिषेधबुद्ध्या प्रयुक्त इति शेषः, *NVT*. 5. 1. 1.

2. MS. ०विशिष्टैका०. 3. MS. स्वात्मविघातकत्व -.

सर्वसाधारणं दुष्टत्वमूलमस्य सूचितं भवति। एतच्च प्रत्युत्तरसूत्रे वक्ष्यते। [1]तदेतदेव तु सर्वसाधारणमसामर्थ्यम्, विशिष्यासामर्थ्यं त्वग्रे वक्ष्यामः। तदुपाधिविशेषाः साधर्म्यादयः। एवं चान्वर्थसंज्ञानिरुक्तिरेवामीषां यद्यपि विशेषलक्षणं तथाऽपि

---

चोत्तरेऽतिव्यापकम्। तयोर्जातित्वमेवेति न वाच्यम्, उक्तानन्तर्भावात्, [2]पञ्चविंशतितमीयं जातिरित्यपि नास्ति, परिगणनप्रसङ्गात्। किञ्च, समीचीनप्रतिज्ञोत्तररूपे द्वितीयानुमाने दोषप्रयोजकीभूतं सत्प्रतिपक्षत्वमस्त्वतिव्यापकम्। नाप्यसाधकत्वाव्याप्येनासाधकतासाधनं जातिः, असदुक्तिकाव्यापनात् असाधकताव्याप्यत्वपुरस्कृतासाधकताव्याप्यादन्येनासाधकतासाधनं जातिरसदुक्तिकाव्यापीति चेत्, न; व्याप्तिपुरस्कारवत् पक्षधर्मतापुरस्कारेऽपि जातिसम्भवेन तदव्यापकत्वात्। नाप्यङ्गवैकल्योपन्यासं परेणाप्रमाणदूषणोद्भावनम् अधिकोद्भावनस्य जातित्वापत्तेः। नापि पुरस्कृतगमकत्वौपयिकरूपविकलेन स्थापनादूषणोद्भावनं जातिः, अर्थान्तरसंकीर्णजात्यव्यापनात् तया स्थापनया अदूषणात् पुरस्कारेऽपि क्वचिज्जातित्वाच्च। नापि वाक्यत्वावान्तरजातिस्तल्लक्षणं वाक्यार्थप्रतिपादनं विना वाक्ये जातिबुद्ध्यनुदयात्; वाक्यार्थज्ञानव्यङ्ग्यत्वे तु तत्काले शब्दस्यातीतत्वात्। कथं प्रत्यक्षेण तद्ग्रहः वाक्यार्थद्वारकानुगतबुद्धेस्तत्कल्पकत्वे तेनैवान्यथासिद्धिः? उच्यते—स्वासाधकताप्रयोजकीभूतरूपवता परासाधकतासाधनं जातिः। यद्वा, व्याप्तिपक्षधर्मतान्यतरानङ्गीकारप्रवृत्तमुत्तरं जातिः। इदमनैकान्तिकमनुमानत्वादिदं ज्ञानं निरालम्बनं वस्तुत्वादित्युत्तरानुमानयोर्व्याप्तिपुरस्कारादेव न जातित्वम्। वस्तुतः स्वव्याघातमुत्तरं जातिः; तच्च येनैव रूपेण स्थापनां व्याहन्ति तेन रूपेण यदि स्वात्मानमपि, तदा स्वव्याघातकत्वं विवक्षितं निरालम्बनानुमानं च स्वेन रूपेण सत्प्रतिपक्षतया स्थापनां दूषयति ननु स्वेनैव रूपेण प्रतिपक्षभावमालम्बत इति शेषः। अत एव प्रकरणसमस्य समानबोधितसाध्यविपर्ययत्वेन स्वसाध्यसाधकत्वेऽपि नाजातित्वं समानबलबोधितसाध्यविपर्ययत्वेन परहन्तृत्वं समानबलबोधितसाध्यविपर्ययत्व एव च समानबलबोधितसाध्यविपर्ययत्वं नास्ति तथा दूषकताप्रयोजकीभूतरूपेण स्वात्मविघातकत्वं लक्षणम्; एतदेव स्वात्मव्याघातकत्वमिति [3]स्वपदमुक्त्वाऽऽत्मपदमुच्चारयतो विवक्षितम्। तदेतदेवेति॥ स्वव्याघातकत्वं सर्वजातिसाधारणं दुष्टत्वबीजं साधर्म्यसमादीनां यद्यदसाधारणं दुष्टत्वबीजं तत्तत्रैव दर्शयिष्याम इत्यर्थः। तदुपाधिविशेषास्तस्य स्वव्याघातकस्य विशेषास्तेन साधर्म्यरूपं स्वव्याघातकमुत्तरं साधर्म्यसमः, एवं सर्वत्र। नन्वेतावतैव सामान्यविशेषलक्षणसिद्धौ किं पुनर्लक्षणेनेत्यत आह—एवं चेति॥ कारणादिज्ञानं च कुत्रोपयुज्यत इत्यत

---

1. MS. तदेव. 2. चतुर्विंशत्यतिरिक्ताऽभिनवा काचिज्जातिरित्यर्थः। MS. पञ्चविंशतमी.
3. MS. °क्त्वापद°.

कारणादिप्रतिसन्धानाय पृथग्लक्षणारम्भः । ते हि प्रतिसंहिताः प्रतिदूषणाय प्रभवन्ति, सदुत्तरापरिस्फूर्तौ जातिप्रयोगे चोपयोक्ष्यन्ते ॥ १ ॥

तत्र—

[1]**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥**

अत्र सामान्यलक्षणगतं प्रत्यवस्थानपदमनुवर्तनीयं साधर्म्यवैधर्म्याभ्यामिति चाऽऽवर्तनीयम् । 'तदि'ति साध्यपरामर्शः, 'उपपत्ते'रिति तादर्थ्ये षष्ठी । यथासंख्यं योगः । प्रतिषेधभागसूचनाय पुंलिङ्गनिर्देशः । द्विविधं हि प्रत्यवस्थानम्, परपक्षप्रतिषेधः स्वपक्षसाधनं च । सामान्यलक्षणेनैव सदुत्तरप्रकरणसमत्वोद्भावनव्यवच्छेदः ।

आह—ते हीति ॥ ते कारणादयः । कारणादिज्ञाने सत्येवाभ्यासपाटवपरप्रयुक्तप्रतिषेधे स्वयंप्रतिग्रहे सौकर्यं भवतीत्यर्थः ॥ १ ॥

'साधर्म्यवैधर्म्यसमा'वित्यस्य विधेयस्योद्देश्याकांक्षायां वाक्यस्य क्रियापदं विनाऽनुपपत्तेः तदाकांक्षायां तद्धर्मोपपत्तेरिति विशेषणपदस्य विशेष्याकाङ्क्षायां चाऽऽह—अत्रेति ॥ 'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जाति'रिति सामान्यलक्षणम् । ननु साधर्म्यवैधर्म्याभ्यामुपसंहारे वादिना कृते तत्साध्यविपर्ययोपपत्त्यर्थं प्रत्यवस्थानं साधर्म्यवैधर्म्यसमाविति लक्षणं सर्वजातिसाधारणमित्यतिव्यापकमित्यत आह—साधर्म्यवैधर्म्याभ्यामिति ॥ सामान्यलक्षणस्थं प्रत्यवस्थानपदवत्तदपि कथं नानुवर्तितं श्रूयमाणपदादेवोक्तगत्योपपत्तेरनुवृत्तेरनुपयोगात्[2] । ननु तच्छब्देन प्रागभिहितसाधर्म्यवैधर्म्यपरामर्शे स्वरूपासिद्धिदेशनाभासे इमे जाती स्यातां न प्रकरणसमदेशनाभासे, परामर्ष्टव्यान्तरञ्च तच्छब्दस्य नास्त्येवेत्यत आह—तदितीति ॥ उपसंहारक्रियायाः सकर्मकत्वेन साध्यं कर्मतया उपस्थितमिति तच्छब्देन तत्परामर्शे सत्प्रतिपक्षाभासत्वमनयोरित्यर्थः । ननु तथाऽपि सत्प्रतिपक्षत्वाभासत्वमनयो'स्तद्धर्मविपर्ययोपपत्ते'रिति पञ्चम्या साध्याभावप्रमाया हेतूकरणेन बाधदेशनाभासत्वस्य तादवस्थ्यादित्यत आह—उपपत्तेरितीति ॥ सम्बन्धमात्रानुशिष्टा षष्ठी तादर्थ्यरूपे सम्बन्ध इत्यर्थः । यथासंख्यमिति ॥ आवर्तितपदेन सह 'साधर्म्यवैधर्म्यसमा'वित्यस्य लक्ष्यपदस्येत्यर्थः । ननु 'साधर्म्यवैधर्म्यसमा'विति पुंलिङ्गनिर्देशो न युक्तः प्रत्यवस्थानस्य विशेष्यत्वे नपुंसकत्वापत्तेर्जातिविशेष्यत्वे स्त्रीलिङ्गत्वापत्तेरित्यत आह—प्रतिषेधेति ॥ नहि जातिः स्थापनारूपा किन्तु प्रतिषेधरूपा, निरनुयोज्यानुयोगरूपत्वाज्जातेरित्यर्थः । ननु यथाश्रुतलक्षणं सदुत्तरसत्प्रतिपक्षव्यापीत्यत आह—सामान्येति ॥ नच वाच्यं सामान्यलक्षणेनापि कथं तद्व्यवच्छेदस्तस्यापि समानबलहेतुप्रतिबद्धत्वात्

1. NS. 5. 1. 2. 2. MS. ०रनुयोगात्.

प्रत्येकं त्रिधा चैते जाती ; [1]सद्विषये, असद्विषये, असदुक्तिके च। तत्राद्योदाहरणं वार्त्तिके। द्वितीयोदाहरणं तु, नित्यः शब्दः स्पर्शशून्यत्वादाकाशवदित्युपसंहारे, नैतदेवम्, अस्ति ह्यनित्येनापि साधर्म्यं प्रमेयत्वं, ततः किं नानित्यो घटवत्। न चेदेवं, नित्योऽपि न स्यात्, अविशेषात्। यद्वा, अस्त्याकाशेनैव वैधर्म्यमप्यस्मदादिबाह्यकरणग्राह्यत्वं, ततः किं नानित्यो घटवत्। न चेदेवं, नित्योऽपि न स्यात्, अविशेषात्। तृतीयोदाहरणं भाष्ये। 'उक्तिमात्रमत्र दुष्टं नार्थ' इति प्रदर्शनार्थं वार्त्तिकतात्पर्यमुपेक्षोक्ता तात्पर्याचार्यैः, 'सदुत्तरमप्युक्तिदोषेणैव

---

स्वसाध्यासाधकत्वपर्यन्तसायितया स्वव्याघातकत्वात् साक्षात् पारम्पर्येण वा स्वव्याघातकत्वे प्रयोजकविशेषाभावादिति तस्य स्थापनाप्रतिबोध्यमात्रोद्देश्यकत्वेन तथाविधस्वव्याघातकत्वेनानुकूल्यकरणात्, तेन सहचारमात्रप्रयुक्तगमकत्वपुरस्कारेण साधर्म्येण सत्प्रतिपक्षदेशना साधर्म्यसमः, तद्वैधर्म्यमात्रप्रयुक्ततद्व्यतिरिक्तपुरस्कारेण वैधर्म्येण सत्प्रतिपक्षदेशना वैधर्म्यसम इति लक्षणे ; तेन प्रत्यक्षादिनापि प्रतिरोधः संगृह्यते।

सद्विषये इति। सदनुमानं प्रतिषेध्यतया विषयो ययोरेवमुत्तरत्र। [2]असदुक्तिके चेति। क्वचित् साधनमेवासमर्थं यथाभासोक्तौ, क्वचित् उक्तिमात्रगतमसामर्थ्यं न तूच्यमानगतमित्यर्थः। यद्यप्यसदुक्तिकत्वमसद्विषयत्वविशेष एव, यत्र सद्विषये स्थापना समीचीना तत्रोत्तरस्यावश्यं दुष्टत्वात्, असद्विषयत्वे तूत्तरस्य समीचीनत्वासमीचीनत्वाभ्यामसदुक्तिकावकाशसम्भवात्, तथाऽपि गोबलीवर्दन्यायेन विभागो द्रष्टव्यः। तत्रेति। यद्युत्पत्तिधर्मकत्वादनित्यः स्यान्नित्यसाधर्म्यादमूर्त्तत्वान्नित्य एव स्यादिति वार्त्तिकोक्तमित्यर्थः। तृतीयेति। यदि क्रियाहेतुगुणयोगाल्लोष्टवदात्मा क्रियावान्, अस्तु आकाशसाधर्म्याद्विभुत्वात् निष्क्रियोऽसौ ; न चास्ति विशेषहेतुरिति तत्तावन्नासिद्धविरुद्धोद्भावनं तत्प्रयोजकरूपानुद्भावनात् नानैकान्तिकत्वमाकाशादौ साध्याभाववति हेत्वभावात् आत्मनस्तु पक्षत्वात्, नतु पक्षे नानैकान्तिकं नापि बाधः यथोक्तरूपहेतोर्विभुत्वादुपजीवकत्वात्, नापि सत्प्रतिपक्षत्वं क्रियाहेतुगुणयुक्तस्यापि निष्क्रियस्याऽऽकाशस्य स्वयमुद्भावनादित्युक्तिमात्रदुष्टमित्यर्थः। कथं तर्हि 'उत्तरमेतन्न जाति'रिति टीका ? वस्तुगत्येति शेष इति समुन्नयनात्। ननु यद्येतद् भाष्यकारीयमुदाहरणं प्रकृतजातिरेव किमिति टीकाकारो वार्त्तिककारस्यापेक्षां वर्णितवानित्यत आह—उक्तिमात्रमिति। 'उपेक्षा' वार्त्तिककारतात्पर्यमुक्तेत्यर्थः। तात्पर्यमभिप्रायः। तथाच भाष्यकारीयोदाहरणे वार्त्तिककृतः कीदृशोऽभिप्रायो हानोपादानोपेक्षान्यतम इति जिज्ञासायां टीकाकृतोक्त'मुपेक्षे'ति। कथमयमभिप्रायस्त्वयोन्नीत इत्यत आह—सदुत्तरमपीति। तथाच तुल्ययोगक्षेमतया प्रकृतेऽपि सम्मतिरुन्नीयत इति भावः। ननु यथा प्रकरण-

---

1. Cp. Śaṅkara Miśra, *Vādivinoda*. 2. MS. 'असद्दाक्तिके'.

जाति'रित्यस्यार्थस्य प्रतिदृष्टान्तप्रकरणसमादौ[1] स्वयमेव स्फुटीकरणात्। अप्रयोजकविपक्षान्वयिधर्मवत्त्वदर्शनं कारणमाद्यायाः, अप्रयोजकसपक्षव्यतिरेकिधर्मवत्त्वदर्शनं च द्वितीयाया इति विभावयितुं भेदेनोपन्यास इति। अन्यथा तु, धर्मान्तरेण तद्धर्मविपर्ययोपपत्तेः प्रत्यवस्थानं प्रतिधर्मसमेत्येकैव स्यात्। कथं पुनः प्रतिधर्मसमप्रकरणसमयोर्भेद इति? इयं बाधदेशनाभासा, 'तद्धर्मविपर्ययोपपत्ते'रिति वचनात्। सा सत्प्रतिपक्षदेशनाभासा, 'प्रक्रियासिद्धे'रिति वचनादित्येके। एवं च मन्यन्ते, प्रमाणान्तरबाधचोदनाभासोऽप्येवं संगृहीतः स्यादिति। 'प्रत्युत्तरसूत्रपर्यालोचनया व्यत्यय' इति तात्पर्यटीका। इह हि[2] प्रत्युत्तरक्रमे विशेषं दर्शयति, तत्र तु प्रतिसाधने बाधमापादयति। किमत्र तत्त्वम्? उत्तरम्, अनन्यथासिद्धेः।

समैकैव साधर्म्यवैधर्म्ये अनादृत्य उक्ता तथा साधर्म्यवैधर्म्यसमे प्रतिषेधसमे इत्येकयोक्त्या किं नाभिधीयेत इत्यत आह—अप्रयोजकेति। अप्रयोजकमापाद्यव्याप्यत्वानभिमतमित्यर्थः। शिष्यव्युत्पादनरसिकतया मुनेर्भेदोपन्यासादरो न ग्रन्थलाघवग्रहः, प्रकरणसमे त्वनया दिशा विशेषो निरूपणीय इति मत्वा सतोऽपि साधर्म्यादिभेदस्यावचनम्। अन्यथा विरोधिधर्मेण प्रत्यवस्थानं विरोधिसम इति साधर्म्यवैधर्म्यप्रकरणसमानामप्यैक्यं स्यादिति। यदि प्रतिपक्षबाधदेशनाभासवैचित्र्यख्यापनाय भेदेन निर्देशस्तर्हि प्रकृतेऽपि तुल्यमिति भावः। इह जातित्वसाक्षाद्व्याप्यदूषकत्वोपाधिविभागः, स च यद्यपि प्रतिधर्मत्वमेव, तथापि प्रतिधर्मत्वमेव साधर्म्यवैधर्म्ये अप्रतिपद्य न गृह्यत इति भेदेनोपन्यास इत्यन्ये; यदि लाघवायोक्तं विशेषमनादृत्य लक्षणपरत्वमेवास्य स्यात्, तथाच यथासूत्रं कर्त्तव्यम्। तदाह—अन्यथेति। तद्धर्मेति। दूष्यहेतुसाधर्म्याभावस्य प्रमाणेनोपपत्तेः सिद्धेर्व्यक्तं बाधमाह। नहि सत्प्रतिपक्षे साध्यसिद्धिरित्यर्थः। प्रक्रियेति। प्रक्रियमाणो दूष्यहेतुसाध्यप्रत्यनीकपक्षस्तत्सिद्ध्यर्थं प्रत्यवस्थानमिति पर्यवसिते सुलभं प्रतिरोधदेशनाभासत्वमित्यर्थः। यद्वा, प्रक्रियमाणसुलभं तत्सिद्धौ विरोध इति प्रतिरोधमात्रप्राप्तेरित्यर्थः। प्रमाणान्तरेति। साधर्म्यवैधर्म्याभ्यामुपसंहारे कृते तद्धर्मविपर्ययोपन्यासेन येन केनचित् प्रत्यवस्थानमिति पर्यवसिते सुलभः प्रमाणान्तरबाधदेशनासंग्रहः। यदि च प्रकरणसमा जातिर्बाधदेशनाभासतयाङ्गीक्रियेत, तदा सूत्रे 'उभयसाधर्म्यादि'ति अनुमानमात्रबाधोन्नयनात्तत्संग्रहः स्यादित्यर्थः। 'व्यत्ययः' पूर्ववैपरीत्यम्। इह हीति। अविशेषपुरस्कारेण प्रवृत्तस्य हि विशेषोपदर्शनमुपालम्भौपयिकमुपपद्यते। न च बाधदेशनायामविशेषपुरस्कारः दूष्याविशिष्टस्यादूषकत्वात्, सत्प्रतिपक्षदेशनाया एव ताद्रूप्यात्। तत्र त्विति। तत्र प्रतिसाधनस्य तुल्यबलस्य बाधकत्वं दूष्यते, तत्तदेव

1. NS. 5. 1. 9; 16. 2. MS. 'इह'.

न हि सत्प्रतिपक्षचोदनायां प्रतिसाधनबाधक आपद्यते, सत्प्रतिपक्षत्वं चापन्नमपि न दोषाय, असाधनात् ; प्रत्युत गुणाय, साम्यमात्रापादनप्रवृत्तत्वात् । नच समबलेन बाधाभिधायिनो व्याघातमुपेक्ष्य विशेषदर्शनं ज्यायः, तद्‌भटापराधोपेक्षणायोगात् । तद्धर्मविपर्ययोपपत्तिप्रक्रियासिद्धी तु विपर्ययेणापि व्याख्यातुं शक्येते । प्रमाणान्तरबाधचोदनाभासवच्च प्रमाणान्तरप्रतिरोधचोदनाभासोऽपि संग्राह्यः, तथाच तदर्थमपि सूत्रमनु[1]सन्धानीयमिति न कश्चिद्विशेषः । [4]यथा हि पित्तान्तरितसितिमानं

सङ्गच्छते, यदि तुल्यबलेन प्रतिसाधनेन प्रतिवादी साधनं बाधेतेत्यर्थः । 'उत्तरमि'ति टीकाकारमतं, प्रत्युत्तरसूत्रयोरनन्यथा[3]सिद्धेरित्यर्थः । तामेव प्रकरणसमप्रत्युत्तरसूत्रस्याह—नहीति । यदि तुल्यबलमपि बाधकं, तदा स्थापनयैव किं प्रतिसाधनं न बाध्यत इत्येतत्परं तत् सूत्रं प्रतिरोधवादिनं प्रत्यनुक्तोपालम्भः स्यादित्यर्थः । ननु यदि तुल्यबलप्रतिसाधनप्रतिबन्धत्वादसाधकत्वं स्थापनायास्तदा तुल्यबलस्थापनाप्रतिरुद्धं प्रतिसाधनमप्यसाधकमिति कथं प्रक्रियामात्रसिद्धिः, ततश्च 'प्रक्रियासिद्धेः[4] प्रकरणसम' इति जात्युत्तरदूषकतया सङ्गच्छत एव तत्रत्यं प्रत्युत्तरसूत्रमित्यत आह—सत्प्रतिपक्षत्वमिति । परस्परप्रतिबन्धेनासाधकाविमौ हेतू इति मन्यमानस्य पूर्वोक्तप्रसङ्ग इष्टापादनमित्यर्थः । ननु समानबलेन बाधाभिधायिनोऽप्यत्र प्रत्युत्तरसूत्रे विशेषदर्शनेन समबलत्वनिराकरणमुपपाद्यत इत्याशयेनात्रत्यप्रत्युत्तरसूत्रानन्यथासिद्धिमुपपादयति—न चेति । बाधं प्रत्यधिकरणस्य हेतुत्वात्, कारणं विना कार्योत्पत्तिमङ्गीकुर्वतो यो व्याघातस्तस्य यदुभयवादिसम्मततया दृढत्वं तेन तस्यैवोद्भाव्यत्वात्, तत्रत्यात्रत्यसूत्रयोर्विपर्यासो भाक्त इत्यर्थः । ननु लक्षणसूत्रस्थ-'तद्धर्मविपर्ययोपपत्तेः', 'प्रक्रियासिद्धे'रितिपदयोरनन्यथासिद्ध्या वैपरीत्यमेव कुतो नेत्यत आह—तद्धर्मेति । 'उपपत्ते'रिति तादर्थ्यषष्ठ्या प्रक्रिया प्रक्रियमाणं प्रत्यनुमानसाध्यं तत्सिद्धेरितीत्थमपि तयोरुपपत्तेः, [5]सूत्रैकदेशानन्यथासिद्धितः सूत्रानन्यथासिद्धेर्बलवत्त्वमेव विपर्ययव्याख्याने विनिगमकमित्यर्थः । ननु प्रकरणसमस्य बाधदेशनाभासत्वे तत्र साधर्म्यमात्रपदस्वरसादनुमानमात्रबाधसंग्रहेण मानान्तरबाधदेशनाभाससंग्रहः स्यादिति न्यायोपष्टम्भात्, सूत्रैकदेशानन्यथासिद्धिरेव बलीयसीत्यत आह—प्रमाणान्तरेति । अनुमानमेव मानान्तरेणापि प्रतिरोधदेशनाभासं भवतीति साधर्म्यपदात्तदसंग्रहस्तुल्यः । साधर्म्यपदं मानमात्रोपलक्षकमिति यदि, तदा बाधदेशनाभासत्वेऽपि नानुपपत्तेरिति तुल्यमित्यर्थः । मानान्तरेण प्रतिरोधदेशनामुदाहरति—यथा हीति । न चास्य न जातित्वमिति वाच्यम्, आभासना-

1. MS. '-सन्ध-'. 2. MS. 'तथा'. 3. MS. '-नन्था-'. 4. MS. 'प्रतिक्रिया-'. 5. MS. 'सूत्रैकदेशोऽ-'.

शंखमुपलभ्य शुक्लोऽयं शंखत्वादितरशंखवदिति प्रयुक्ते जातिवाद्याह, नायं तथा, पीतस्योपलब्धेः। न चेदिदं बाधकं, त्वदनुमानमपि न साधकं, तस्य प्रमाणत्वेनाविशेषात्, तथा प्रतिरोधेनापि प्रत्यवतिष्ठते। यावदनुमानाच्छुक्लः, प्रत्यक्षात् पीत एव किं न स्यात्। अस्ति च तदत्र, तथा प्रतिभासमानत्वात्, न चास्ति कश्चित् विशेष इति। एवं शब्दोपमानयोरपि द्रष्टव्यम्। न चायं केवलनिरनुयोज्यानुयोगः, प्रत्यक्षादेराभासत्वादिति वाच्यम्। अनाभासत्वेऽप्येवमुक्तेर्दुष्टत्वादनुमानवत् तथात्वे वा समोऽसंग्रहः। तस्मादियं सत्प्रतिपक्षचोदनाभासा, सा च बाधचोदनाभासेति स्थितम्। अनैकान्तिकचोदनाभासवार्त्तिकन्तु साधनगतं समानधर्मत्वं धर्ममपेक्ष्य, नतु प्रतिसाधनमपेक्ष्य, तद्व्यभिचारानुद्भावनात्। अनिर्णायकार्थो वाऽनैकान्तिकशब्दः। तदनयोः प्रतिसाधनद्वारा हेतुर्दूष्यः, सत्प्रतिपक्षत्वमारोप्यम्। तद्भ्रान्तिः फलम्। कारणमुक्तम्। यदि मदुक्तो हेतुस्तदा त्वदीयस्य प्रतिरोधादसाधनत्वं, न चेदविशेषादसाधकत्वमित्युभयथा दूषकत्वम्। प्रमाद-प्रतिभाक्षयौ चावसरः

भाससाधारणप्रत्यक्षादिमात्रस्यैव साधकत्वपुरस्कारेण स्वव्याघातकत्वसम्भवात्। यद्यपि कथायां प्रत्यक्षादीनामपि लिङ्गत्वेनैवोपपादनात् सर्वत्रानुमानबाधप्रतिरोधावेव, तथापि लिङ्गत्वावच्छेदकत्वेन तेषां बाधप्रतिरोधावुक्तौ। नच प्रत्यक्षाभासोपन्यासेन प्रमासामग्र्यनेन सम्पादितेति। नच व्यवस्थावगमविषयीभावः समयो न निर्वाहितः स्यादिति वाच्यम्, अनुमानाभासोपन्यासेऽपि तुल्यत्वात्। अथ तस्य प्रमाणत्वाभावेऽपि तत्तया तदवगतिदशायान्तथा तदन्यत्रापि तुल्यमिति भावः। **एवमिति**। यथा नरास्थि शुचि प्राण्यङ्गत्वादित्युक्ते आगमादशुच्येव किं न स्यादविशेषात्, इयं व्यक्तिर्न गवयपदवाच्या व्यक्तित्वादित्युक्ते उपमानाद् गवयपदवाच्यैव किन्न स्यादविशेषादित्यत्रेत्यर्थः। ननु प्रत्यक्षाभासेन प्रतिरोधदेशना न जातिस्तथा मानान्तरतः किं तद्ग्रहणे जातेर्निरनुयोज्यानुयोगविशेषत्वेऽपि केवलस्य तद्भिन्नत्वादित्याशङ्क्य निराचष्टे—**न चेति**। यथा सदनुमानोत्तरमप्युक्तिदोषाज्जातिस्तथा मानान्तरमपीति प्रत्यक्षादिनेव तदाभासेनाप्युत्तरवज्जातिस्तत्प्रयोजकरूपाप्रच्यवात्, कथमन्यथा मानान्तरबाधदेशनासंग्रहमवादीरित्यर्थः। एवं सिद्धे वार्त्तिकविरोधं परिहरति—**अनैकान्तिकेति**। सद्धेतावपि समानधर्मत्वं धर्मो व्यभिचारी साध्याव्याप्य इति धर्मं प्रधानीकृत्य तदुक्तं, न तु धर्मिणं सद्धेतुमभिप्रेत्येत्यर्थः। यद्वा, एकान्तो निश्चयस्तस्मै न प्रभवतीति योगं [1]विवक्षित्वा सत्प्रतिपक्षमेवानैकान्तिकपदेनोच्यत इत्याह—**अनिर्णायकेति**। यदुक्तं कारणादिप्रतिसन्धानाय पृथक् लक्षणमनयोरिति तदा दर्शयति—**तदनयोरिति**। **प्रमादेति**—बुद्धिपूर्वजातिप्रयोगे प्रतिभाक्षयोऽन्यत्र

1. MS. 'विवच्चितत्वा-'.

सर्वत्र ॥ २ ॥

दुष्टत्वमूलन्तु चिन्त्यते, द्विविधं च तत्, साधारणमसाधारणञ्च । तत्र प्रथमं, नानाप्रकारो व्याघातो वक्ष्यते । द्वितीयं, युक्ताङ्गहीनत्वम् अयुक्ताङ्गाधिकत्वमविषयवृत्तित्वञ्च । तत्र अनयोर्युक्ताङ्गहीनत्वप्रदर्शनार्थं सूत्रम्—

**[1]गोत्वाद्गोसिद्धिवत्तत्सिद्धेः[2] ।**

गोसिद्धिर्गोव्यवहारसिद्धिः । इहैवं प्रत्युत्तरक्रमः—यदिदं तव नियममनपेक्ष्य प्रत्यवस्थानं तत् किं स्वाभिप्रायेण वा पराभिप्रायेण वा ? नाद्यः, व्याघातात् । तथाहि, नेदं स्वसाध्यबुद्धिजनकं नियमानपेक्षप्रतिधर्मप्रतिहतत्वादिति जातिद्वयवाक्यार्थः । सच जात्युत्तरमपि व्याप्नोति । तथाहि, नेदं दूष्यदुष्टिबुद्धिजनकं, नियमानपेक्षप्रतिधर्मप्रतिहतत्वादिति । तथाच, स्वव्याघातकोपाधिव्याप्ततया जीवितमेवास्य कुतः प्रागेव स्थापनादूषकत्वम् । न चैवमुभयं भवतु दुष्टम्, जातेरदूषकत्वस्थितौ हेतोर्निर्दोषत्वात् । दूषणान्तरदूष्यत्वे वा तदेव वाच्यम् । उभयथापीदमदोषोद्भावनम् । यद्वा, इदमुत्तरम्—यदि न स्थापनादूषकत्वनियतं किमनेन ? अथ नियममुपलभ्योच्यते, तर्हि हृदि नियमो, वाचि तद्विपर्यय इति वाङ्मनसविसंवादः । यद्वा, दूषणसमर्थोऽयमर्थ इति न चेज्जानासि, तदर्थं वाक्यप्रयोगो व्याहतः, ज्ञानपूर्वकत्वात्तस्य । नच सामर्थ्यज्ञानं लिङ्गमन्तरेण, तच्च

---

प्रमादः । एतच्चोपलक्षणं मयि वदति कः समर्थ इति प्रौढिचिख्यापयिषायामपि तत्प्रयोगात् ॥ २ ॥

'साधारणमि'ति सर्वजातीनामिति शेषः । युक्ताङ्गहीनत्वायुक्ताङ्गाधिकत्वयोरविषयवृत्तेरविशेषत्वेऽपि गोवृषन्यायेनात्र विभागः—तत्रेति । युक्तमङ्गं साधनव्याप्तिरूपं तद्धीनत्वं सूत्रेण प्रदर्श्यते—

तस्यार्थः—यथा गोत्वाद्गोव्यवहारव्याप्ताद् गोसिद्धिर्गोव्यवहारसिद्धिस्तथा व्याप्तात् साधर्म्याद्वैधर्म्याद्वाऽनुमेयसिद्धिर्न तु तन्मात्रादतो न साम्यमिति व्याप्तेरङ्गत्वं दर्शयितुमाह—इहैवमिति । स्थापनाजात्युत्तरे इत्यर्थः । 'जातेरि'ति स्वव्याघातकतया जातेरदूषकत्वे दूषणान्तराभावेन स्थापनायाः स्वसाध्यसाधकत्वादित्यर्थः । 'उभयथापी'ति जातेरदूषकत्वे स्थापनाया जात्युत्तरदूष्यत्वे चेत्यर्थः । दूषणसामर्थ्यं जानामीति पक्षं निराकरोति—न चेति । व्यवहारविषयस्य तज्जातीयत्वेन लिङ्गेन सामर्थ्यमनुमातव्यमतः तत्राप्ययं दोष इत्यर्थः । 'सूत्रार्थ' इति तत्तात्पर्यार्थ इत्यर्थः ।

---

1. NS. 5. 1. 3. 2. '-सिद्धिः' in all the editions of NS.

प्रतिधर्ममात्रप्रतिहतमसाधकमेवेति जानन् कथमाद्रियेथाः । तथाप्यदुष्टत्वे तस्यान्यदपि लिङ्गं कथं तथा दूषयेदिति व्याघातपरम्परा । नापि पराभिप्रायेण । परस्यैवमनभ्युपगमादिति सूत्रार्थः ॥ ३ ॥

---

ननु किमसाधकत्वम् ? न तावत् पक्षे साध्यज्ञानाजनकत्वं, तेनापि तत्त्वाज्ञानदशायां पक्षे साध्यभ्रमजननात्, सद्धेतोः कदाचित्तथात्वाच्च । अथैतत्काले साध्यविशिष्टपक्षज्ञानाजनकत्वं न हि तद्दूषणज्ञानदशायां भ्रमरूपाप्यनुमितिः साध्यविशिष्टपक्षज्ञानञ्च हेतुत्वेन ज्ञानदशायां प्रसिद्धमिति चेत्, सद्धेतोरसत्प्रतिपक्षतादशायामपि पूर्वकाले साध्यविशिष्टपक्षज्ञानाजनकत्वप्रसङ्गात् । नापि व्याप्तिपक्षधर्मतान्यतरराहित्यं तत् सत्प्रतिपक्षासाधारणसद्धेतोस्तदभावात् दशाविशेषे तस्य तद्दोषत्वात् साध्याप्रसिद्धौ प्रकृतसाध्यव्याप्त्यप्रसिद्धेश्च । अथैतत्कालीनैतत्पक्षीयत्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाभावस्तत्काले तत्पक्षेविषयसाध्यत्वाभिमतप्रमाजनकत्वाभावो वाऽसाधकत्वं ; नच प्रतियोग्यप्रसिद्धिः, एतत्कालीनैतत्पक्षीयत्वतत्तत्कालतत्तत्पक्षत्वयोर्व्यधिकरणयोरेव प्रतियोगितावच्छेदकत्वादिति । तन्न, सद्धेतोः सत्प्रतिपक्षत्वाज्ञानदशायामपि तादृशप्रमायामकरणत्वेनासाधकत्वापत्तेः । नापि समीचीनसाध्यप्रत्ययाजनकत्वं तत् ; बाधविरुद्धासिद्धेषु साध्यानधिकरणपक्षे सत्यसाध्यप्रतीत्यप्रसिद्धेः, वह्निमति बाष्पे धूमभ्रमाद् वह्न्यनुमितेः सत्त्वाच्च । न चान्य एव वह्निस्तत्र भासते ; मानाभावात्, तद्वह्नेः प्रत्यभिज्ञानात्, एकव्यक्तिके तदसम्भवाच्च । नच साध्यानुमितिर्लिङ्गविषयत्वेन भ्रमः, अनुमितौ लिङ्गभाने मानाभावात् । अथ लिङ्गमनुमितिविषयः, नियमेनानुमितिहेतुविशेषणधीविषयत्वात्, पर्वतत्ववत् साध्यवच्च । किञ्च, एकविशेषणवत्त्वेन भाते विशेषणान्तरधीसामग्रीत एव विशिष्टवैशिष्ट्यज्ञानमिति धूमविशिष्टे च वह्निवैशिष्ट्यानुमितिः । न चानुमितौ व्याप्यवत्त्वभानेऽनुमित्यविच्छेदः, सिद्धसाधनेन तद्विच्छेदात् । तन्न ; यत्र दैवाद्धूमसत्त्वमपि तत्र तदंशेऽप्यनुमितेः सत्त्वात् । अत्रोच्यते, ज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वमसाधकत्वं ; तथाहि विरुद्धत्वादिज्ञानदशावर्त्तीदं पक्षे साध्यप्रत्ययाजनकं विरुद्धादित्वात्, पक्षविशेषणमहिम्ना तद्दशायां पक्षे साध्यप्रत्ययाजनकत्वं सिध्यति । बाधितादावपि लिङ्गभ्रमात् पक्षे साध्यज्ञानजनकत्वमिति न प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिः । यद्वा, अनुमितिप्रतिबन्धकत्वावच्छेदकरूपवत्त्वमसाधकत्वम् । तथाहीदमनुमितिप्रतिबन्धकतावच्छेदकरूपवत् अनैकान्तिकत्वात् मतवत् ; अनुमितिप्रतिबन्धकतावच्छेदकञ्च रूपं ज्ञाने विषयतया अनैकान्तिकत्वादिकमेव । नच साध्याविशेषः, उपाधिविशेषस्यानुमेयत्वात् तोयत्वेन पिपासोपशमनसामर्थ्यावच्छेदकरूपवत्त्वानुमानवदित्यस्माकं पैतृकः[1] पन्थाः ॥ ३ ॥

---

1. Cp. Gaṅgeśa Upādhyāya, *Tattvacintāmaṇi.*

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः[1] ।**

'वर्ण्यावर्ण्यसाध्ये'ति भावप्रधानो निर्देशः । समाख्यानिमित्तविशेषात् पञ्चलक्षणानि । 'उभयसाध्यत्वादि'ति षष्ठम् । 'साध्यदृष्टान्तयोर्धर्मविकल्पादि'त्यतिप्रसङ्गनिवारणार्थं जनकधर्मप्रदर्शनेनोक्तिसम्भवख्यापनार्थञ्च । नहि युक्त्याभासमप्रतिसन्धायैवमेवोत्कर्षादिना प्रत्यवस्थातुमर्हति, सर्वेण सर्वोत्कर्षादिप्रसङ्गात् । कः पुनरयं धर्मविकल्पः ? वैचित्र्यमन्यथाभावः सदसत्त्वमिति यावत् । तत्रोत्कर्षसमे तावद्दृष्टान्ते

---

साधर्म्यवैधर्म्यनिरूप्यत्वाद्धर्मविकल्पस्य साध्यदृष्टान्तविकल्पसमुत्थजातिषट्कलक्षणप्रकरणम् । अत्र 'प्रत्यवस्थान'पदमनुवर्त्तनीयम् ।

ननु वर्ण्यावर्ण्यसाध्यपदैः प्रत्यवस्थानासम्भवः, धर्मिणः स्वपरसाधारण्याभावेन समर्थानन्वयात् । किञ्च, वर्ण्यं ज्ञाप्यं, तच्च हेतोः साध्यस्य वा ? आद्ये, हेतोर्वर्णनीयं साध्यं, नच साध्येन प्रत्यवस्थानं सम्भवति ; अन्त्ये, साध्यस्य साध्यान्तरभावात् केन प्रत्यवस्थेयम् ? अत एव साध्यपदेनापि प्रत्यवस्थानासम्भवः । अवर्ण्येनाज्ञाप्येन प्रत्यवस्थानमस्वाभाव्योद्भावनमेवेत्यत आह—भावप्रधानेति । ननूत्कर्षादीनां लक्ष्यपदत्वात् साध्यदृष्टान्तविकल्पस्य षट्कसाधारण्येनातिव्यापकत्वात् प्रत्येकमासां लक्षणानुपपत्तिरित्यत आह—समाख्येति । अविद्यमानधर्मासंजनादि यन्निरुक्तं तदेव प्रत्येकं लक्षणमित्यर्थः । यद्यप्येतत् साध्यसमेऽप्यस्ति यथाश्रुतस्य वर्ण्यसमाभेदेऽपि साध्यपदस्य विशेषपरत्वेन तन्निरासः, तथाप्येकदेशान्वयित्वप्रतिपादनार्थमाह—उभयेति । तर्हि साध्यदृष्टान्तयोरित्यादि किमर्थमित्यत आह—साध्येति । बुद्धिपूर्वकजातिप्रयोगे परव्यामोहनार्थमविद्यमानधर्माद्यारोपे नियामकाभावात् सर्वत्र सर्वेषामापादनप्रसङ्ग इत्यतिप्रसक्तिः साध्यदृष्टान्तविकल्पसमुत्थत्वान्निरस्यत इत्यर्थः । अबुद्धिपूर्वकजातिप्रयोगे त्वाह—जनकेति । उत्थाननिमित्तभ्रमबीजदर्शनार्थमित्यर्थः । नन्विदं कथमेकप्रकरणम्, साध्यदृष्टान्तविकल्पस्य प्रत्येकमन्यथात्वेनैकत्वाभावादित्याशयेन पृच्छति—कः पुनरिति । यद्यपि साध्यदृष्टान्तविकल्पपदस्य तद्वाच्यसमस्तविशेषोपस्थितावपि योग्यतया न तद्विशेषे तात्पर्यं, तथापि साध्यदृष्टान्तविकल्पसमुत्थत्वमेकं रूपमस्तीत्याशयेनोत्तरम्—वैचित्र्यमिति । विकल्पस्य तत्तद्भेदेऽपि वैचित्र्यरूपमनुगतमेकोऽर्थ इत्यर्थः । विशिष्योत्कर्षादौ वैचित्र्यं योजयति—तत्रेति । 'योगवियोगा'विति साध्यदृष्टान्तयोर्यथासंख्यम्, तेन व्याप्यस्य व्यापकस्य वा उक्तप्रयोगोपनीतस्य दृष्टान्ते आपाद-

---

1. NS. 5. 1. 4.

साध्ये च व्याप्यव्यापकयोरन्यतरेण धर्मान्तरस्य योगवियोगौ। उभयत्रापि वियोगे योगे चोत्कर्षाभावात्।

अनित्यं घटादि रूपादिमत् अश्रौत्रं वा दृष्टं, शब्दोऽपि तथा स्यादविशेषात्। तथाच, विवक्षितविपरीतसाधनाद्विरुद्धो हेतुरिति। तदस्याः साध्यधर्मिणि वियुक्तस्य धर्मस्य दृष्टान्तधर्मिणि सिषाधयिषितधर्मयोगोपलम्भो व्यभिचारानुपलम्भो वा तन्निदानोपाध्यनुपलम्भमात्रं वा कारणं हेतुर्दूष्यः। विरुद्धत्वमारोप्यम्। तद्भ्रान्तिः फलम्। विशेषविरोधदेशनाभासा चेयम्। द्विविधा च, सदसद्विषयत्वात्। अयमेव जनको धर्मोऽपकर्षेऽपि केवलं व्यापकत्वाभिमानेनैकधर्मनिवृत्त्या साध्ये सिषाधयिषितहेत्वोरन्यतरस्यापकर्षः। दार्ष्टान्तिके व्याप्त्यनभ्युप-

---

माह। वर्ण्योपलम्भः पक्षे च तद्विरहप्रयुक्तस्तत्साहचर्यानुपलम्भस्तथेत्यर्थः। उत्कर्षाभावादिति। एकत्र सतोऽन्यत्र सत्तास्थनिमित्तापादनस्य उत्कर्षत्वादिति भावः। तेन साध्यदृष्टान्तान्यतरस्मिन् साहचर्यमात्रपुरस्कृतगमकत्वयोर्व्याप्यव्यापकयोरन्यतरेण साध्यदृष्टान्तयोरन्यतरस्मिन्नविद्यमानधर्मप्रसञ्जनमुत्कर्षसम इति लक्षणम्।

अत्र भावाभावोत्कर्षकृतवैचित्र्ये उत्कर्षापकर्षलक्षणे इति भाष्यकारीयं मतं प्रयोजकरूपाविशेषान्न युक्तमित्युदाहरणेन विभावयति—[1]अश्रौत्रं वेति। विवक्षितेति—नैयायिकस्य शब्दे नीरूपत्वसमानाधिकरणमनित्यत्वं विवक्षितं कृतकत्वं वा रूपत्वेनेव रूपवत्त्वेनापि सहचरितमतस्तदपि शब्दे साधयेत्, साहचर्यमात्रस्य गमकत्वस्याविशेषादिति विशेषविरोधदेशनाभासत्वमस्या जातेरित्यर्थः। तदेवाह—तदस्या इति। साध्यधर्मा पक्षस्तत्र वियुक्तस्यासत इत्यर्थः। 'सिषाधयिषितधर्मे'त्युपलक्षणं, साधनधर्मोऽपि द्रष्टव्यः, पक्षाविद्यमानदृष्टान्तविद्यमानधर्मवत् पक्षविद्यमानदृष्टान्ताविद्यमानधर्मोऽपि द्रष्टव्यः। सम्बन्धमात्रं व्यभिचारिसाधारण्यगमकमित्युक्त्यसम्भवं मन्यमान आह—व्यभिचारेति। तथाप्यनुपलब्धव्यभिचारस्य सद्धेतुत्वमेवेत्याशङ्क्याऽऽह—तन्निदानेति। पक्षासद्धर्मा[2]पादनबाधात्तदुन्नीत उपाधिर्वस्तुतोऽस्त्येव तमपश्यतः प्रत्यवस्थानमित्यर्थः। असदुक्तिकत्वमाह तृतीयाविधानसम्भवात्। उत्कर्षेण प्रत्यवस्थानस्यासदुत्तरत्वनियमेनोक्तिमात्रगतासद्रूपताविरहादित्याशयेनाऽऽह—[3]द्विविधा चेति। अयमेवेति। योगवियोगलक्षणः साहचर्यमात्रपुरस्कृतव्यापकधर्मव्यावृत्त्या साध्ये सिषाधयिषितहेत्वन्यतराभावप्रसञ्जनमपकर्षसम इत्यपकर्षसमलक्षणम्। यद्वा, पराभ्युपगतव्यतिरेकस्यासञ्जनमुत्कर्षसमः। पराभ्युपगतव्यतिरेकापादनमपकर्षसम

---

1. MS. 'अश्रौवलेति'. 2. MS. '-पादान-'. 3. MS. 'द्विधा'.

गमेन दृष्टान्ते तदपकर्षस्यासम्भवदुक्तिकत्वात् । धर्मान्तरापकर्षे प्रकृतादूषणे अर्थान्तर-मतानुज्ञयोरन्यतरेणैव निग्रहात् । जातेश्च निरनुयोज्यानुयोगभेदतया ततो भिन्नत्वात् । सिषाधयिषितापकर्षे तु व्यापकानुपलब्धिलक्षणानुमानान्तरबाध-चोदना स्यात् । हेत्वपकर्षे चासिद्धिदेशनाभासा[1] । कथं पुनर्दृश्यमानस्यैव हेतो-रपकर्षः, व्यापकानुपलब्धिदार्ढ्याभिमानेन दर्शनस्य भ्रान्तत्वारोपणात् । अत एवेश्वरानुमानेऽपि विशेषविरोधचोदनायां शङ्कराचार्यप्रभृतयः सर्व एव शरीर्या-द्यापत्तिमुत्कर्षसमां वर्णयन्ति स्म ; तद्व्यावृत्तेश्च कर्तृव्यावृत्तिमपकर्षसमम् । तस्मात् प्रत्यवस्थानप्रकारमात्रप्रदर्शनार्थे भाष्यवार्त्तिकयोरुदाहरणे । मिथो विरोधान्निग्रहान्तर-

---

इति लक्षणे । न च पराभ्युपगतव्यतिरेकः परेणाभ्युपगत एवापाद्यत इत्युत्कर्षसम एवायं स्यादिति वाच्यम्, तत्र साध्यसाधनाभ्यामेवापादनात्, अत्र तु तयोरेव व्यतिरेकस्या-पाद्यत्वात् । यद्वा, अपकृष्यमाणस्य पक्षनिष्ठाभावप्रतियोगित्वापादनेऽपकर्षसमः, पक्षे तदभावापादने तूत्कर्ष इति भेदात् । धर्मान्तरेति । न हि धर्मान्तराभावेन प्रकृतं दूष्यत इत्यर्थान्तरम्, इष्टस्यापादनं मतानुज्ञा, कथञ्चिदनिष्टापादने त्वविशेषसम इत्यर्थः । असिद्धिदेशनेति । स्वरूपासिद्धिदेशनेत्यर्थः । ननु प्रत्यक्षेण साध्य-साधनाभावसिद्धौ बाधासिद्धिदेशने युक्ते, अनुमानेन तु व्यापकानुपलब्धिरूपेणाभावं साधयित्वा तन्निवृत्तिरशक्या, विरोधिनि प्रत्यक्षे जागरूकेऽनुमानानुदयादित्याशयवान् पृच्छति—कथमिति । अनुमानमूलभूतव्याप्तिग्राहकप्रमाणदार्ढ्येन प्रत्यक्षस्याप्रामाण्य-शङ्काकलङ्कितत्वेनाबाधकत्वादनुमानोदयो ज्वालायामभेदप्रत्यक्ष इव भेदग्राह्यानुमानोदय इत्याशयेनोत्तरम्—व्यापकेति । ननु दृष्टान्तकल्पितव्याप्त्यवष्टम्भेन दार्ष्टान्तिकधर्मोप-चयमपकर्षं भाष्यकार आह, वार्त्तिककारस्तु पक्षकल्पितव्याप्त्यवष्टम्भेन दृष्टान्तधर्मोप-चयमपकर्षमाहेति पूर्वाचार्यविरोधमाशङ्क्याचार्यान्तरसम्मतिमाह—अत एवेति । एवं सति भाष्यवार्त्तिकं सङ्गमयति—तस्मादिति । विषयाविवक्षया प्रत्यवस्थानप्रकारमात्रे तयोस्तात्पर्यमित्यर्थः । अथ विषयविवक्षैव कुतो नेत्यत आह—मिथ इति । सर्व-पूर्वाचार्योपमर्देनापि व्याख्येयतया भाष्यवार्त्तिकयोर्बलवतोरनुरोधस्तदा क्रियेत यद्यनयो-रैकमत्यं भवेत् ; न त्वेवमित्यर्थः । नन्वेवमुक्तिप्रकारमात्रश्चैतयोः सकाशाद् ग्राह्यं तदा तदीयमुदाहरणं क्वान्तर्भावणीयमनन्तर्भावे विभागव्याघात इत्यत आह—[2]निग्रहान्तरत्वाच्चेति । अर्थान्तरादेरित्यर्थः । ननु टीकाकारस्याप्रतिषेधात्तयो-

---

1. MS. '-चोदना-'. 2. MS. '-न्तरा-'.

त्वाच्च। अत एव टीकाकारस्तत्र तूष्णीं बभूव। कार्यसमायान्तु गत्वा दिङ्नागोदाहरणमुत्कर्षापकर्षयोरन्तर्भावयन्निममेवार्थं व्यञ्जयति स्म, हेत्वपकर्षश्च तत्र स्फुटः। तदस्याव्यापकत्वाभिमतानुपलब्धिर्द्वारम्। दूष्यो हेतुरेव। साध्यापकर्षे बाधः सत्प्रतिपक्षत्वं वा हेत्वपकर्षेऽसिद्धत्वमारोप्यम्। आरोप्यदेशनाभासा चेयमिति।

ख्यापनीयो वर्ण्यः साध्य इति यावत्। पक्षोपसंहार्यहेतुमत्तया सिद्धस्य दृष्टान्तस्य दृष्टान्तानपेक्षपक्षमात्रविवक्षितरूपवद्धेतुमत्तया असिद्धिर्धर्मविकल्पः। तस्माद्वर्ण्यत्वेन प्रत्यवस्थानं वर्ण्यसमः। असिद्धस्वार्थत्वं, संशयसमानविषयत्वं, प्रवृत्तसाध्यज्ञापनशक्तिकत्वं, व्याप्तिग्राहकप्रमाणविरहः, स्वरूपविशेषश्चेति हेतोः पक्षमात्र-

---

रुदाहरणसम्मतिरुन्नीयत इत्यत आह—अत एवेति। प्रामाणिकस्खलितसङ्गूहनपरतयेति शेषः। तत्परत्वं कथमुन्नीयत इत्यत आह—कार्यसमायामिति। ननु तथापि हेत्वपकर्षे पूर्वाचार्यसंमत्यभावात् कथं भाष्यवार्त्तिकानादर इत्यत आह—हेत्वपकर्ष इति। 'तत्रे'ति कार्यसमायामित्यर्थः। 'बाध' इति व्यापकानुपलब्धेर्दूष्याद्यधिकरणत्वप्रतिसन्धाने बाधोऽनधिकरणत्वप्रतिसन्धाने सत्प्रतिपक्ष इति व्यवस्थितविकल्पः। असिद्धत्वमिति। स्वरूपासिद्धत्वमित्यर्थः। आरोप्येति। यद् यत्रारोप्यते तद्देशनाभासत्वन्तस्येत्यर्थः।

व्याख्यानपूर्वकं सौत्रपदमवतारयति—ख्यापनीय इति। साध्यदृष्टान्तयोः सदसत्त्वाभ्यां धर्मवैचित्र्यमिहानुगतधर्मद्वारा बोद्धव्यम्, न तु पूर्ववद्धर्मान्तरसाहचर्यविरहप्रयुक्तमित्याह—पक्षेति। दृष्टान्ते ये धर्मा हेतोरविवक्षिताः। पक्षमात्रे विवक्षितास्तद्वत्त्वेनासत्त्वं स्वरूपेण च सत्त्वमित्यर्थः, 'तस्मादि'ति यथोक्तधर्मविकल्पादित्यर्थः, दृष्टान्तावृत्तिसिद्ध्यनुगुणधर्मवत्तया गमकत्वबलेन दृष्टान्तस्य ख्यापनीयत्वापादनं वर्ण्यसम इति लक्षणम्। पूर्वोक्तधर्मान् दर्शयति—असिद्धार्थत्वमिति। असिद्धार्थत्वं व्यापकत्वाभिमतधर्मवत्त्वेऽन्यनिर्णीयमाने धर्मिणि निश्चीयमानसद्भावत्वं संशयसमानविषयत्वमभिन्नविषयसंशयजननसमर्थसंस्कारसाचिव्यं तथाभूतसंस्कारस्य प्रमितिमात्रनाश्यत्वात्। प्रवृत्तेति। शक्तेः सहकारिविशेषानतिरेकात्तस्य प्राप्तिरूपा प्रवृत्तिस्तृतीयलिङ्गपरामर्शः। यद्यपि साध्यसाधनयोगिनो दृष्टान्तस्यापि प्रवृत्तसाध्यज्ञापनशक्तिरस्ति, तथापि सिषाधयिषितधर्मवत्तयोद्देश्यवृत्तित्वं तत्त्वमित्यन्ये। व्याप्तीति। प्रकृतहेतुभिन्नमानावधारितव्यापकत्ववत्त्वे धर्मिण्यविद्यमानत्वमित्यर्थः। यद्यपि पक्षोऽपि तथा, तथापि व्याप्तिग्राहकविषयीकृतविशेषशून्यवृत्तित्वं व्याप्तिग्राहकमानविरह इत्यन्ये। स्वरूपेति।

विवक्षिता धर्माः। न त्वेतेऽतिसंस्पृष्टदृष्टान्ता एवापेक्षिताः तदियमेवं प्रवर्तते साध्यसिद्ध्यौपयिकसमस्तविशेषणवद्धेतुमत्तया दृष्टान्तः स्यात्। न त्वन्यथा। असिद्धार्थत्वादयश्च हेतोः साध्यसिद्ध्यौपयिकाः। तद् यदि पक्षवदसिद्धार्थहेतुमानयं तर्हि साध्यवत्तया ख्यापनीयः स्यात्। न हि साध्यविकलो दृष्टान्तो नाम, अथ न तथा, तथापि पक्षविवक्षितहेतुरूपवत्तया ख्यापनीयः, न हि साधनविकलो दृष्टान्तः स्यादिति। एवमन्यत्रापि रूपचतुष्टये बोद्धव्यम्। अस्याश्च पक्षविवक्षितो हेतुविशेषो द्वारं, दृष्टान्तो दूष्यः ; तद्द्वारा हेतुर्वा साध्यविकलत्वसाधनविकलत्वे वा विरुद्धत्वासाधारणत्वे वा आरोप्ये। तद्भ्रान्तिः फलम्। तच्चोदनाभासा चेयमिति।

इयमेव विपर्ययेण रीतिरवर्ण्यसमस्य। तथा हि पक्षधर्मतौपयिकरूपवद्धेतुमत्तया सिद्धस्यापि पक्षस्य दृष्टान्तविवक्षितरूपवद्धेतुमत्तयाऽसिद्धिर्धर्मविकल्पः। तस्मादवर्ण्यत्वेन प्रत्यवस्थानमवर्ण्यसमः। सिद्धार्थत्वमसंदिग्धविषयत्वम् अप्रवृत्तसाध्यज्ञापनशक्तिकत्वं साध्यसाधनप्रमाणान्तरवत्ता स्वरूपविशेषश्चेति। एते हि हेतुधर्मा दृष्टान्ते विवक्षिता न तु पक्षे। तदिदं द्वारम्, दूष्यो हेतुः, आश्रयासिद्धि-स्वरूपासिद्धि-व्याप्यत्वासिद्धयश्चारोप्याः, तद्भ्रान्तिः फलं, तदाभासा चेयमिति। एवञ्च प्रवर्तते यदि दृष्टान्तवत् सिद्धार्थः पक्षो न तर्हि ख्यापनीयः तस्यापि सिद्धार्थत्वात्।

---

पक्षधर्मत्वप्रयोजकरूपशालीत्यर्थः, तद्रूपस्यैवापूर्वसाध्यसिद्धिसम्पादकत्वात्। न त्वेत इति। तथा सत्यदृष्टान्तत्वापात इति भावः। तद् यदीति। ननु हेतुसत्त्वासत्त्वाभ्यां दृष्टान्तस्य साध्यसाधनविकलत्वोपपादनेन प्राप्त्यप्राप्तिसमावज्जातिद्वयं किन्न स्यात्, न स्यात् तत्रैकानुगतरूपस्याभावादिह तु तत्सम्भवात्, एवमेव प्रकारं संशयसमानविषयत्वादावतिदिशति—एवमिति। हेतुविशेष इति हेतोरसिद्धार्थत्वादिर्विशेष इत्यर्थः। कथं दृष्टान्तो दूष्य इत्यत आह—साध्येति। कथं तद्द्वारा हेतुर्दूष्य इत्यत आह—विरुद्धेति। यथासंख्यं साध्यसाधनविकलत्वयोरित्यर्थः। विरुद्धं च सन्दिग्धं बोद्धव्यम्। दृष्टान्तसाध्यसन्देहे सन्दिग्धसाध्यविपरीतव्याप्तिकत्वात्।

इयमिति। धर्मिविकल्पादिरूपेत्यर्थः, विपर्ययमाह—तथा हीति। तस्माद्धर्मविकल्पादित्यर्थः, लक्षणं तु दृष्टान्तमात्रवृत्तिसाध्यसिद्ध्यनुगुणधर्मयोगायोगान्यतरेण साध्यस्यावर्ण्यत्वापादनमवर्ण्यसमः। स्वरूपविशेषश्चेति व्याप्तिग्रहौपयिक इत्यर्थः, न तु पक्ष इति। तथा सति पक्षत्वव्याघात इत्यर्थः। आश्रयासिद्धिं विवृणोति—न तर्हीति। अज्ञातं हि ज्ञाप्यते न तु ज्ञातमिति भावः। व्याप्यत्वासिद्धिं विवृणोति—

तथा चापक्षधर्मो हेतुः । अथ न तथा, तथापि न ख्यापनीयः तादृशहेतुमत्तया अननुसंगृहीतत्वात्, तथा च स्वरूपासिद्धो हेतुरित्यादि ।

[1]विकल्पसमायान्तु हेतोर्धर्मान्तरं प्रति वा धर्मान्तरस्य साध्यधर्मं प्रति वा धर्मान्तरस्यैव धर्मान्तरं प्रति वा व्यभिचारो धर्मविकल्पः । स च [2]दृष्टान्तधर्मभेदेन वा यथा भाष्ये गुरुलघुत्वम्, साध्यदृष्टान्तधर्मभेदेन वा यथा वार्त्तिके विभागजत्वाविभागजत्वम्, साध्यमात्रधर्मभेदेन वा यथा वाङ्मनस-पक्षीकरणे मूर्तामूर्तत्वमिति । अनयैव दिशा धर्मान्तरस्य साध्यधर्मं प्रति व्यभिचारो द्रष्टव्यः । यथाऽनित्यः शब्दः कृतकत्वादित्युक्ते प्रमेयत्वे समानेऽपि, यथा किञ्चिन्नित्यमाकाशादिकं किञ्चिदनित्यं घटादि तथा कृतकत्वे समानेऽपि, किञ्चिदनित्यं भविष्यति घटादि, किञ्चिन्नित्यं शब्दादि, एवञ्च धर्मान्तरस्य धर्मान्तरं प्रति व्यभिचारो वाच्यः । तद् यथा अत्रैव प्रयोगे द्रव्यत्वे

अथेति । असिद्धार्थे पक्षे किं दृष्टान्ते विवक्षितरूपतिरस्कारेण हेतोरुपादानं न पुरस्कारेण वा, आद्ये व्याप्यत्वासिद्धिः, अन्त्ये स्वरूपासिद्धिरित्याह—तथा चेति । आदि-ग्रहणादसन्दिग्धविषयत्वादिरूपचतुष्टयेऽप्ययं प्रकार ऊह्यः ।

स चेति । हेतोर्धर्मान्तरव्यभिचारस्त्रिविधः, तद् यथा दृष्टान्तव्यक्ति-भेदमादाय साध्यदृष्टान्तरूपं वा भेदं साध्यव्यक्तिभेदं वोपपादयति । आद्यं दर्शयति—दृष्टान्तभेदेनेति । तथा च भाष्यं "क्रियाहेतुगुणयुक्तं किञ्चित् गुरु यथा लोष्टं, किञ्चिल्लघु यथा वायुरिति । एवं क्रियागुणयुक्तं किञ्चित् क्रियावद् यथा लोष्टं, किञ्चिदक्रियं यथाऽऽत्मे"ति । द्वितीयमाह—साध्येति । तथा वार्त्तिकं सत्युत्पत्तिधर्मकत्वे यथा विभागजः शब्दो न घट एवं नित्यानित्यविकल्पोऽपि स्यादिति । तृतीयमाह—साध्यमात्रेति । यथाऽनित्ये वाङ्मनसे इत्यत्र अनयैवेति हेतोर्धर्मान्तरं प्रति व्यभिचारे यथा प्रकारत्रयमुपदर्शितं तथा साध्यधर्मं प्रति धर्मान्तरस्य व्यभिचारे प्रकारत्रयं द्रष्टव्यं दृष्टान्तभेदेन वा साध्यदृष्टान्तभेदेन वा साध्यमात्रभेदेन वा । तत्र आद्येऽन्वयव्यतिरेक-दृष्टान्तभेदेनान्यथा सम्भवादित्याह—यथेति । अपरौ तु परमतमाश्रित्य पूर्वोदाहरणयो-रेव द्रष्टव्याविति नोक्तौ । एवमेव धर्मान्तरस्य धर्मान्तरं प्रति व्यभिचारे तास्तिस्रो विधा द्रष्टव्या इत्याह—एवमिति । तत्र दृष्टान्तभेदेन व्यभिचार उदाहरणमाह—तद् यथेति । साध्यदृष्टान्तभेदेन खल्वपि अनित्यः शब्दः कृतकत्वाद्विभागवदित्युक्ते गुणत्वे समानेऽपि

1. Cp. Varadarāja, धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।
हेतोश्च व्यभिचारोक्तिर्विकल्पसमजातिता ॥—*TR.*

2. MS. '-धर्मा-'.

समाने यथा किञ्चिदुष्णं तेजः, किञ्चिदनुष्णं जलादि, तथा कार्यत्वे समानेऽपि किञ्चिन्नित्यं भविष्यति शब्दादि, किञ्चिदनित्यं घटादि । तदत्र साध्यदृष्टान्तयोरिति प्रत्येकसमुदायोपलक्षकतया योजनीयम् । तस्मात् साध्यव्यभिचारव्यवस्थापनं विकल्पसमः । तदिदं द्वारं, दूष्यो हेतुः, अनैकान्तिकत्वमारोप्यं, तदाभासा चेयमिति ।

साध्यसमायास्तूभयसाध्यत्वं द्वारम् । किं पुनस्तदुच्यते । पक्षहेतुदृष्टान्ता हि प्रमाणान्तरसिद्धा अनुमानाङ्गं नासिद्धाः । न च तत एव सिद्धाः । सिषाधयिषितस्तु पक्षेऽसिद्धः, तत एव सेत्स्यतीति तदिदं सिद्धमसिद्धमुभयं तत्त्वं धर्मविकल्पः, तत्समुच्चये चकारः, तत्र सिषाधयिषितवत् सिद्धस्याप्यनुमेयत्वं साध्यत्वं तस्मादनुमानप्रयोगप्रसञ्जनं साध्यसमः[1] । कथमेतत् ? लिङ्गस्य तत्प्रतिपत्तिजनकत्वमेव हि तस्यानुमेयत्वं तच्च दृष्टान्ते साध्यप्रयोजकत्वाभ्युपगमात् साधन-

---

विभागः कारणविभागपूर्वकः शब्दस्य कारणमात्रविभागपूर्वकस्तथापि कृतकत्वे तुल्येऽपि नित्यानित्यविकल्पोऽस्त्विति साध्यमात्रभेदेन खल्वपि यथा तत्रैव प्रयोगे शब्दत्वे समानेऽपि कश्चित् ककारः कश्चिन्नकारस्तथा कृतकत्वे समानेऽपि कश्चिन्नित्यः कश्चिदनित्यः स्यादिति । प्रत्येकेति । प्रत्येकार्थाभिधानं चेत्तदा तदुपलक्षणं, समुदायार्थोऽपि द्रष्टव्यः, समुदायार्थाभिधानं च तदा तदुपलक्षणं, प्रत्येकार्थोऽपि बोद्धव्य इत्यर्थः । एवं व्याख्याय प्रकृते योजयति—तस्मादिति । यद्यपि यत्र दृष्टान्तमात्रेण हेत्वाभासान्तरोद्भावनं तदव्यापकमिति तथापि दृष्टान्तमात्रेण हेत्वाभासोद्भावनं विकल्पसम इति लक्षणम् । अन्ये तु दृष्टान्तमात्रेण यत्र हेत्वाभासोद्भावनं तत्र जात्यन्तरमेवेत्याहुः ।

ननु साध्यसमायान्तु शब्दद्योतितव्यावृत्तधर्मान्तरसत्त्वात् कथमेकं प्रकरणमित्याशयवान् पृच्छति—किं पुनरिति । चकारसमुचितमेकमर्थमभिप्रेत्योत्तरं पक्षेति । 'तस्मादि'ति सिद्धस्यापि साध्यत्वादित्यर्थः । तेन तत्प्रयोगान्तर्भावबलेन सिद्धानां तत्प्रयोगसाध्यत्वापादनं साध्यसम इति लक्षणम् । धर्मादीनां तत्प्रयोगसाध्यत्वाभिमानबीजं पृच्छति—कथमिति । उत्तरं—लिङ्गस्येति । तच्चेति । तत्प्रतिपत्तिजन-

---

1. Cp. Jayanta, उभयोरपि साध्यदृष्टान्तयोः साध्यत्वापादनेन प्रत्यवस्थानं साध्यसमः प्रतिषेधः । यदि यथा घटस्तथा शब्दः, प्राप्तं तर्हि यथा शब्दस्तथा घट इति । शब्दश्चानित्यतया साध्य इति घटोऽपि साध्य एव स्यादन्यथा हि न तेन तुल्यो भवेदिति, *NM*.

दृष्टान्त-हेतुपक्षाणां सिद्धानामपि साध्यवत् ।
साध्यतापादनं तस्माल्लिङ्गात् साध्यसमो भवेत् ॥

प्रमाणान्तरसिद्धानामेव पक्षहेतुदृष्टान्तानां साध्यधर्मस्येव तत एव लिङ्गात् साध्यत्वापादनं साध्यसमः । 'तस्मादि'ति वर्ण्यसमतो भेदं दर्शयति ।—*TR*.

धर्मस्य धर्मिलिङ्गयोस्तु लैङ्गिकप्रतिपत्त्यन्तर्भावाभ्युपगमात् । तथा ह्येवं प्रयुज्यते उभयधर्मवत्तया हि सिद्धो दृष्टान्तः स्यात्, न च प्रस्तुतोपन्यस्तस्य प्रमाणान्तरं साधकं लिङ्गस्याप्रयोजकत्वप्रसङ्गात् । न हि तत्साधनादन्यदस्य प्रयोजकत्वं नाम तस्मात्तत्सिद्धयेऽप्येतदेव प्रयोक्तव्यं तच्च यावन्न प्रयुज्यते तावत् साध्यविकलो दृष्टान्तः । एवं नासिद्धौ लिङ्गधर्मिणावनुमानाङ्गं न च तत्सिद्धये प्रमाणान्तरं प्रभवति लिङ्गस्य तत्राप्रयोजकत्वप्रसङ्गात् । तथा च तस्य साध्येऽप्यप्रयोजकत्वापत्तेः तदेकप्रतिपत्तिकत्वात्तस्य न हि लिङ्गधर्मिणावथोद्य साध्यप्रतिपत्तिः । तस्मात्तत्सिद्धयेऽप्येतदेव प्रयोक्तव्यम् । तथा च तत्प्रयोगात् पूर्वं धर्मिणोऽप्रसिद्धेराश्रयासिद्धिः ; दृष्टान्तासिद्धेर्व्याप्यत्वासिद्धिः ; लिङ्गासिद्धेः स्वरूपासिद्धिरित्येवं त्रिप्रकारेयम् । तदस्या उभयसाध्यत्वं द्वारम् । हेतुदृष्टान्तौ दूष्यौ, साध्यविकलत्वासिद्धी आरोप्ये, तदाभासा चेयमिति ॥ ४ ॥

आसां दुष्टत्वमूलचिन्तासूत्रम्—

**[1]किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ।**

अत्रैवं प्रत्युत्तरक्रमः । भवेदप्येवं यदि वयमनित्यत्वसहचरितं कृतकत्वं घटे दृष्टं शब्दे धर्मिण्युपलभमानास्तत्रानित्यत्वमुपसंहरामः, न त्वेवं, किन्तु तेन व्याप्तं तदिति । एवं यदि रूपादिमत्त्वेन तद्व्याप्तं भवेत्, कस्ततो-

कत्वमेव हि तत्र तस्य प्रयोजनकत्वमित्यभिमानो मूलम्, अत्र ततश्च हेतोर्दृष्टान्ते साध्यधर्माप्रयोजकत्वे प्रकृतसाध्येऽप्यप्रयोजकत्वप्रसङ्ग इत्येव निमित्तं तत्प्रयोगसाध्यत्वापादने इति भावः । ननु पक्षे साध्यप्रयोजकत्वाभ्युपगमात् दृष्टान्तगतसाध्यधर्मज्ञापनाय साधनं प्रयुज्यताम् । धर्मिलिङ्गयोस्तदापादनं बीजरहितमित्यत आह—**धर्मिलिङ्गयो**रिति । न हि साध्यमात्रं साधनमात्रं वा ज्ञाप्यम्, किं त्वेतत्साधनादेतत्साध्यवानयं धर्मीति । तथा च धर्मिलिङ्गयोस्तत्प्रयोज्यत्वं सुलभं तत्प्रतिपत्तिजनकत्वरूपत्वात् तत्प्रयोजनकत्वस्येति भावः । **त्रिप्रकारे**ति । उक्ताश्रयासिद्धिप्रभेदेनेत्यर्थः । **उभये**ति । दृष्टान्तसाध्यता हेतुसाध्यता चेत्यर्थः । **साध्यविकले**ति । दृष्टान्तसाध्यविकलत्वे व्याप्यत्वासिद्धिः, हेतोः साध्यत्वे स्वरूपासिद्धिः, धर्मिणः साध्यत्वे चाश्रयासिद्धिरित्यर्थः ; तत्प्रयोगान्तर्गतेषु कस्यचित् तत्प्रयोगसाध्यत्वमिहापाद्यम्, वर्ण्यसमे तु साध्यत्वमात्रमिति विशेषः ॥ ४ ॥

**एवमि**ति । अपकर्षसमे किञ्चिन्नियतादित्यर्थः । वैधर्म्यादित्यस्यान्यमर्थमाह—

1. NS. 5. 1. 5.

ऽस्योत्कर्षं नेच्छेत्। न त्वेवम्। तदिदमुक्तं किञ्चित्साधर्म्यान्नियतादित्यर्थः। उपसंहारः साध्यधर्मस्य। वैधर्म्याद् विशेषमात्रादनियतान्न प्रतिषेधः विपरीतसिद्धिरूप इत्यर्थः[1]। तवायमभ्युपगमो न ममेति चेत्, एवं तर्हि नेदं साधकमुत्कर्षमात्रदुष्टत्वादिति जातिवाक्यार्थः स्यात्। तथा च पूर्ववत् स्वोक्तिव्याघातो वाच्यः, एवमपकर्षसमेऽपि वैधर्म्यादनियामकधर्मव्यावृत्तेर्न प्रतिषेधः, साध्यहेत्वोरपकर्षरूप इति सूत्रावयवार्थः। एवमनभ्युपगमे तु स एव व्याघातः। एवं वर्ण्यसमेऽपि। किञ्चित्साधर्म्यात् साध्यसामान्यनियमौपयिकात् सपक्षगतया हेतुव्यक्त्या पक्षगताया हेतुव्यक्तेरुपसंहारसिद्धेर्वैधर्म्यादसिद्धत्वादेरप्रतिषेधः। न हि व्याप्त्यौपयिकं तत्, किन्तु पक्षधर्मत्वौपयिकं व्याप्त्यौपयिकं च सपक्षे विवक्षितं न त्वन्यत्। एवमनभ्युपगमे तु स एवाव्यावृत्तौ व्याघातः। यथोक्तवर्ण्यत्वस्य दूषणवाक्यार्थव्याप्तेरिति। एवं विपर्ययेणावर्ण्यसमेऽपि हेतुव्यक्तेर्दृष्टान्तगतया हेतुव्यक्त्या किञ्चित्साधर्म्यात् व्याप्यसामान्यवत्त्वलक्षणादुपसंहारसिद्धेर्वैधर्म्यात् सिद्धार्थत्वादेरप्रतिषेधः। न हि सपक्षे तल्लिङ्गमिति पक्षेऽपि। तथा सति पक्षत्वव्याघातात्। व्याहन्यतां तदिति चेत्। एवमभ्युपगमे दूषणस्यैव व्याघातात्। एवंभूतेनावर्ण्यत्वेन तस्यापि व्याप्तेरित्यादि। तदनयोरविषयवृत्तित्वं दुष्टत्वमूलम्। असिद्धार्थत्वादीनां लिङ्गधर्माणां पक्षैकविषयाणां सपक्षे नयनात् सिद्धार्थत्वादीनां च सपक्षैकनियतानां पक्षे नयनादिति। एवं विकल्पसमेऽपि किञ्चित्साधर्म्यात् केनचिद् व्याप्यत्वाल्लिङ्गस्य तत्सिद्धेः पक्षोपसंहारसिद्धेः वैधर्म्यादर्थान्तरेणाव्याप्तत्वादप्रतिषेधः। न ह्येकेन व्याप्तं सर्वमित्यभ्युपगमः। नाप्येकव्यभिचारे सर्वव्यभिचार इति नियमः। तथात्वे वा स्वोक्तिव्याघात इत्येवमादि।

---

वैधर्म्यादिति। न ह्यव्यापकनिवृत्तेरव्याप्यनिवृत्तिरिति भावः। वर्ण्यसमापादने साधर्म्यादित्यस्यार्थमाह—साध्यसामान्येति। व्याप्यतावच्छेदकादित्यर्थः। 'उपसंहारसिद्धे'रिति व्याप्यतावच्छेदकरूपवत्त्वेनैकजातीयत्वनिश्चयादित्यर्थः। 'वैधर्म्यादि'त्यस्यार्थमाह—असिद्धत्वादेरिति। इत्यादीति। प्रागभिहितनानाप्रकारकव्याघात आदिपदार्थः। 'विकल्पसमे वैधर्म्यादि'त्यस्यार्थमाह—अर्थान्तरेति।

---

1. Cp. 'किञ्चित्साधर्म्याद्' व्याप्तात् साध्योपसंहारे सिद्धे 'वैधर्म्याद्'व्याप्तात् कुतश्चिद्धर्मात् प्रतिषेधो न भवतीत्यर्थः।—*TR*.

अत्राप्यविषयवृत्तित्वं दुष्टत्वमूलम्। व्यभिचारादसाधकमित्युचितं, किन्तु तत्रैव, न त्वन्यव्यभिचारादन्यत्रेति, साध्यसमे तु प्रमाणान्तरसिद्धेन दृष्टान्तेन प्रमाणान्तरसिद्धस्य पक्षस्य प्रमाणान्तरसिद्धात् [1]किञ्चित्साधर्म्याद्व्याप्तात् साध्यधर्मोपसंहारसिद्धेर्वैधर्म्यात् तल्लिङ्गासिद्धत्वादप्रतिषेधः। न हि पक्षसपक्षलिङ्गानां तत एव लिङ्गात् सिद्धिरनुमानाङ्गं चक्रकेतरेतराश्रयप्रसङ्गात्। न चैवमस्त्विति वाच्यम्। स्वोक्तिव्याघातात्। दुष्टस्यानङ्गत्वात्। अङ्गत्वे वा दोषानवकाशात्। दूषणद्वारकश्च व्याघातः पूर्ववत्, तस्याप्येवंभूतसाध्यत्वाक्रान्तेः। तदिदमयुक्ताङ्गाधिक्यं पक्षसपक्षहेतूनां सिद्धानामनुमानाङ्गत्वमुचितमेव तल्लिङ्गसिद्धत्वं त्वयुक्तमिति। न त्वेवं सति लिङ्गमप्रयोजकं स्यात् साध्यस्यान्यत एव सिद्धेरित्युक्तम्। न वै तत् सिद्धिजनकत्वमेवास्य प्रयोजकत्वम्। किन्तु निरुपाधिः सम्बन्धः। अन्यथा हि प्रयोजकत्वव्याघात एव स्यादिति। तदिदमुक्तं किञ्चित्साधर्म्यात् प्रयोजकाद् व्याप्तादित्यर्थः॥ ५॥

वर्ण्यावर्ण्यसाध्यसमानां समाधानान्तरमाह—

**[2]साध्यातिदेशाच्च दृष्टान्तोपपत्तेः[3]।**

अस्यैवमुत्थानं किं दृष्टान्तदार्ष्टान्तिकभावमुभयोरभ्युपेत्योभयसाध्यत्वादिति

---

चक्रकेति। व्याप्तिपक्षतयोः सिद्धौ तद्विशिष्टहेतुः सिद्धस्तत्सिद्धौ च तस्मात् पक्षदृष्टान्तसिद्धिस्तयोश्च सिद्धौ व्याप्तिपक्षधर्मतयोः सिद्धेरिति चक्रकम्, एवं पक्षदृष्टान्तासिद्धौ व्याप्तिपक्षधर्मतासंगत्या तद्विशिष्टहेतुसिद्धिस्ततश्च पक्षदृष्टान्तसिद्धिरितीतरेतराश्रयत्वमित्यर्थः। **दुष्टस्येति**। प्रागुक्तदोषेणेति प्रातिस्विकं दोषमुक्त्वा साधारणमाह—**दूषणद्वारक** इति। **तस्यापीति**। दूषणवाक्यस्यानुमानतामापाद्य प्रवृत्तिरिति भावः। जातिवादिनोऽभिमानबीजमुद्घाटयति—**न त्वेवमिति**। 'न वै' इति वैशब्दः परीहासे। तवाभिमानमात्रमित्यर्थः। किमत्र विनिगमकमित्यत आह—**अन्यथा हीति**। त्वया हि वैचित्र्यरूपसाध्यविकल्पस्य तज्जात्युत्थाननिमित्तत्वाभ्युपगमेन तत्राप्येवं प्रसञ्जनसौकर्यादित्यर्थः। ननु स्वयं लिङ्गप्रयोजकत्वानङ्गीकारेऽपि परसिद्धेनाप्युक्ते प्रत्यवस्थानं सम्भवति न दृष्टान्तमात्रास्वीकारे। कथकत्वाभावेन पराभ्युपगमरीतेरप्यसम्भवात्। व्याख्यातेऽर्थे सूत्रं योजयति—**तदिदमिति** ॥ ५ ॥

---

1. Cp. किञ्चित्साधर्म्यादुपसंहारः सिध्यति, यथा 'गौरेवं गवयः' इति।—*NM.*
2. NS. 5. 1. 6.
3. Cp. 'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः', तेनाविपरीततया शब्दोऽतिदिश्यते, यथा घटः प्रयत्नानन्तरीयकः सन्नित्यः एवं शब्दोऽपीति इत्यादि—*NM.*

प्रत्यवस्थानमन्यथा वा अन्यथात्वे धर्मविकल्पो नास्ति कुतो जातेरुत्थानम्, अभ्युपगमे तु अतिदिश्यमानधर्माधारो दृष्टान्तः, सिद्धेन चातिदेशो भवति नासिद्धेनेति न्यायात् प्रसञ्जितव्याघातः। यदि तद्धर्मातिदेशः कथं तस्य साध्यत्वं तच्चेत् कथं तेनातिदेशः। तस्मात् साध्यातिदेशाभ्युपगमाद्दृष्टान्तस्योपपत्तिरभ्युपगमो यतः ततो न प्रतिषेधोपपत्तिः। यद्वा, दृष्टान्तस्योपपत्तेः सिद्धेः साध्यातिदेशो यतस्तस्मात् प्रतिषेधानुपपत्तिरिति ॥ ६ ॥

**[1]प्राप्य साध्यमप्राप्य वा हेतोः[2] प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च [3]प्राप्त्यप्राप्तिसमौ।**

साधकत्वमिति विकल्पशेषः, जात्युत्थानकथनाय विकल्पोपक्रमः। साध्यं कार्यं ज्ञाप्यं च। प्राप्तिः प्रत्यासत्तिः, सा च संयोग-समवाय-विशेषणत्व-व्याप्यत्व-विषयत्वाद्यनेकप्रकारेष्वेकतमा। अविशेषः सिद्धत्वं तच्च कार्यविषये

---

अन्यथात्व इति। न हि धर्मविकल्पानामपि पक्षादिसिद्धिनैरपेक्ष्येण साधकत्वमित्यर्थः। पूर्वव्याख्यायामभ्युपगमपदाध्याहारक्लेशेनापरितुष्यन्नाह—यद्वेति ॥ ६ ॥

साध्यसमलक्षणज्ञानस्य सम्बन्धविषयत्वेन तद्विशेषणप्राप्तिसमज्ञानाहेतुत्वादनन्तरं प्राप्तिनिरूप्यजातिप्रकरणसूत्रं पठति—प्राप्येति। प्राप्येत्यस्य समानकर्तृकक्रियान्तरगर्भार्थत्वात् क्रियान्तरमध्याहरति—साधकत्वमितीति। ननु प्राप्य वाऽप्राप्य वेति विकल्पान्तरं साधकत्वमिति प्रथमान्तस्य शेषत्वे सूत्रेऽनन्वयप्रसङ्गः। अत्र साधकत्व इति सप्तम्यन्तमध्याहार्यमित्येके। साधकत्वमिति प्रथमान्तमेव हेतोरित्यनन्तरं यदि तदेत्यपरः शेषो दातव्य इत्यन्ये। विकल्पक्रियाकर्मभूतः शेष इति मध्यपदलोपी समासस्तेन साधकत्वं विकल्प्येत्यन्वय इत्यपरे। विकल्पभागस्य लक्षणानुपयोगमाशङ्क्याह—जात्युत्थानेति। अव्यापकत्वमाशङ्क्याह—साध्यमिति। न चैवमननुगम इति वाच्यम्, उत्थाननिमित्ताननुगमेऽप्यविशेषेण लक्षणे तदभावात्। तथाप्यविशेषस्य

---

यतः साध्यधर्मोऽन्यत्रातिदिश्यते स दृष्टान्तः। सिद्धेन चातिदेशो भवत्यसिद्धस्येति न्यायात् सिद्धो दृष्टान्तः। पक्षस्तु साध्योऽङ्गीकार्यः। उभयोरपि सिद्धत्वे साध्यत्वे वा दृष्टान्तदार्ष्टान्तिकभावव्याघात इति।—*TR.*

यतो यस्माद् दृष्टान्तादन्यत्र साध्यधर्मित्वे, अतिदिश्यते यथा घटस्तथा शब्दोऽपीति प्रतिपाद्यते। 'उभयोरपि सिद्धत्वे' इत्यवर्ण्यसमयोरुत्तरम्। 'साध्यत्वे' वेति वर्ण्यसाध्यसमयोरुत्तरमिति विभागः।—*Laghudipikā ṭikā.*

1. NS. 5. 1. 7.
2. हेतोः साधकत्वमिति शेषः—*TR.*
3. प्राप्य साध्यं साधयति हेतुश्चेत् प्राप्तिकारणः।
   साध्यस्य पूर्वं सिद्धिः स्यादिति प्राप्तिसमोदयः ॥—*TR.*

 

सत्त्वं ज्ञाप्यविषये ज्ञातत्वम् । तदियमेवं प्रवर्तते लिङ्गतज्ज्ञानयोर्हि कार्यमनुमितिज्ञानम्, अप्राप्य च कार्यकरणे करणस्यातिप्रसङ्गात् प्राप्यकरणं वक्तव्यं सच्च प्राप्यते नासच्च, विशेषे किं कस्य कारणं कार्यं वेति निष्फलमनुमानम् । एवमप्राप्यज्ञापने अतिप्रसङ्गात् प्राप्यज्ञापनं वक्तव्यं लिङ्गवच्च ज्ञानमपि ज्ञापकं, न च लिङ्गिना तस्य संयोगादिलक्षणा प्राप्तिरस्ति, ततो विषयित्वमेव वक्तव्यम् । तथा च लिङ्गपरामर्श एव लिङ्गिनः स्फुरणे ज्ञातत्वाविशेषात् किं कस्य ज्ञापकं ज्ञाप्यं वेति निष्फलमनुमानम् । एते एव विपर्ययेणाप्राप्तिसमे । तथा हि प्राप्त्या विशेषादकरणे अज्ञापने वाऽप्राप्य कारणं ज्ञापनं च वक्तव्यं, तच्चायुक्तमतिप्रसङ्गात्, तदुक्तं न ह्यप्राप्य वह्निर्दहतीति करणे । न ह्यप्राप्य दीपः प्रकाशयतीति ज्ञापने । अन्ये तु विशेषप्राप्तिप्रतिक्षेपेणैवेमामाहुः । एवं हि प्रवर्तते—साधनविशेषः साध्यविशेषेण व्याप्तो न वा, न चेत् न तं गमयेदतिप्रसङ्गात् । व्याप्तश्चेन्नाज्ञातस्तथा गमयितुमर्हति अतिप्रसङ्गात् । ततो लिङ्गविशेषवत् साध्यविशेषोऽपि प्रागेवावगन्तव्यः । तन्निरूप्यत्वाद् व्याप्तेः, तथा चानुमानमनर्थकमिति प्राप्तिसमा । द्वितीया तु करणादि हि कर्मप्रत्यासन्नं सत् साध्यसाधनसमर्थं, लिङ्गपरामर्शश्च करणं, न चास्य साध्यविशेषणप्रत्यासत्तिरस्ति, ततो न साधनमिति । किमत्र तत्त्वं सर्वम् इयमेवेति नियमस्त्वनुपपन्नः, अवान्तरवचनभङ्गिभेदानामनन्तत्वात् । लक्षणन्तु प्राप्तावविशेषेण प्रतिक्षेपः अप्राप्तावतिप्रसङ्गेनेति । तदत्र प्राप्तिसमाया द्वारमप्राप्तावसाधनत्वपरिशेषः । हेतुप्रयोगो दूष्यः साधनन्यायातिपाते नासाधनत्वमारोप्यम्, तच्चोचितकाललक्षणसहकारिविरहात् विशेषणासिद्धत्वं तद्देशनाभासा

---

सत्त्वज्ञातत्वाभ्यां द्विरूपत्वात् तद्वत्त्वाननुगमः टीकाकृदुक्तगङ्गासागरवदभेदात्मकाविशेषाव्याप्तिः । मैवं, साम्यमविशेषश्चातन्निर्वाहश्च कृतं विषये सत्त्वेन ज्ञप्तिविषये प्राप्येऽभेदेनेति प्रकारभेदेऽप्यविरोधात् । अत एवेति । कृतिज्ञप्तिभेदविवक्षया द्विवचनम् । विशेषव्याप्तिप्रतिक्षेपेण पराभ्युपगतत्वेन जात्युत्थानद्वारताऽङ्गभेदेनेति शेषः । तेषां मते ज्ञप्तिमात्रपर्यवसिते इमे जाती इत्येवकारार्थः । अवान्तरान्तरा वचनभङ्गिभेदानां दुरधिगमत्वात् केन लिङ्गेनावान्तर्भावो ज्ञातव्य इत्यत आह—लक्षणं त्विति । साध्यप्राप्तिमात्राविशेषापादनात् साधकदोषाभिधानं प्राप्तिसमः, साध्याप्राप्तिमात्रबलेनातिप्रसङ्गसाधके दोषाभिधानमप्राप्तिसम इत्यर्थः । तदत्रेति । अतिप्रसङ्गादप्राप्तो न साधारणमतः प्राप्तो हेतुः परिशेषाद्वाच्य इति एवं कृत्वा प्राप्तिसमेत्यत आह—तत्रेति । साध्यप्रागभाववान्

चेयमिति । अप्राप्तिसमायास्तु द्वारं प्राप्तावविशेषः । परिशेषो वा अकारकत्वं वा हेतुर्दूष्यः । प्राप्तिलक्षणविशेषणासिद्धिरारोप्या, तद्देशनाभासा चेयमिति ॥ ७ ॥

दुष्टत्वमूलचिन्तासूत्रम्—

[1]घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ।

इहैवं प्रत्युत्तरक्रमः—कृतिपक्षे किं भवान् कारणानामन्योन्येन प्राप्तिमभिप्रैति, फलेन वा, प्रथमे सत्त्वेनाविशेषो गुण एव । मृत्प्राप्तैर्दण्डादिभिर्घटादिनिष्पत्तिदर्शनात्, सत्प्राप्तेश्च ; तथापि मिथः प्राप्तानां स्वरूपाभेदः स्यात् गङ्गासागरवदिति चेत्, न, मिथः प्राप्तैरप्यसंकीर्णस्वरूपैरेव दण्डादिभिर्घटादिनिष्पत्तिदर्शनात् । न द्वितीयोऽनभ्युपगमात् । न हि फलेन साधनानां प्राप्तिं तदुत्पत्त्यङ्गमभ्युपगच्छामः । कुत इति चेत्, अप्राप्तैरेव साधनैर्घटादिनिष्पत्तिदर्शनात् । अतिप्रसङ्गभिया मम तावदेवमभ्युपगम इति चेत्, न, घटादिनिष्पत्तिदर्शनात् । अन्तत आदिपदसंगृहीतस्य त्वदभ्युपगतस्याप्राप्तैरेव साधनैर्निष्पत्तिदर्शनादित्यर्थः । न चातिप्रसङ्गः, कारणशक्तेर्नियतत्वात्, कालदेशयोरपि समाधाननियतत्वात् । कुत एतत् ? घटादिनिष्पत्तिदर्शनादेवेति । तदिदमयुक्ताङ्गाधिकत्वम् । फलप्राप्तेरयुक्ताया एव साधनाङ्गत्वेन स्वीकारात् । ज्ञप्तिपक्षे तु लिङ्गस्य धर्मिणा संयोगादिः, साध्यधर्मेण सर्वोपसंहारवद् व्याप्त्यन्तर्भावश्च प्राप्तिरस्ति ज्ञायते च ।

---

कालः साध्यसिद्धौ सहकारीष्यते, तत्काले च साध्यसाधनयोरसंबन्धादसंबद्धस्य च साधनत्वेऽतिप्रसङ्गात् सम्बन्धावश्यकतायां द्वयोरपि सत्त्वे किं कस्य साधनमित्यर्थः । प्राप्ताविति । प्राप्तयोरविशेषादसाधनत्वे परिशेषादप्राप्तयोस्तथात्वेऽतिप्रसङ्ग इत्यर्थः । अकारकत्वं वेति । कृतकस्य करणायोगादकृतकस्य करणे नियमानुपपत्तेरकरणमेवायातमित्यर्थः ॥ ७ ॥

सत्प्राप्तेरिति । न ह्यसत् प्राप्यते किन्तु सदिति सत्तापादनं नानिष्टमित्यर्थः । रूपान्तरेण प्राप्तिसमामापाद्य सूत्रं योजयति—मिथ इति । न हि मिथः प्राप्तिरभेदव्याप्तेत्यर्थः । अप्राप्तेरेवेति, फलप्राप्तेरङ्गत्वेऽऽन्योन्याश्रय इति भावः । ननु घटादिनिष्पत्तिदर्शनं भ्रम इत्यत आह—अन्तत इति । ननु कारणशक्तेर्नियामकत्वेनासत्त्वाविशेषात् सर्वस्य सर्वकार्यत्वाभावेऽपि कारणशक्तेरविशेषात् सर्वत्र देशे काले वा कार्योत्पत्तिर्दुष्परिहरेत्यत आह—कालदेशयोरिति । यस्मिन् देशे काले च कारणानां

---

1. NS. 5. 1. 8.

विशेषतो व्याप्तेरज्ञानमिति चेत्, किमतः न ह्यनुमितौ विशेषयोर्व्याप्तिज्ञानमुपयुज्यते। कुत इति चेत्, लिङ्गेन घटादिनिष्पत्तिदर्शनात्। आदिपदसंगृहीतेनासाधकत्वानुमानेन विशेषासाधकत्वसिद्धेस्त्वयैवाभ्युपगमाच्च। अनुत्थानं चोत्तरस्य। तदिदमविषयवृत्तित्वं व्याप्तिज्ञानं ह्यङ्गमेव, न तु विशेषविषयम्। अयुक्ताङ्गाधिकत्वं वा विशेषव्याप्तिज्ञानस्यानङ्गत्वादिति। तथापि लिङ्गज्ञानस्य न साध्यधर्मेण प्राप्तिरस्तीति चेत्, किं विषयित्वलक्षणा नास्ति, आहोस्विदन्याऽपि। न प्रथमः। प्रतिपत्त्यनुबन्धाभावेऽपि व्यापारानुबन्धस्य सत्त्वात्। स एव कथमिति चेत्, तद्व्याप्तविषयत्वात्। अत एव न द्वितीयः। एवंभूतायाः प्राप्तेः सत्त्वादिति। एवमनभ्युपगमे वाऽनुत्थानमुत्तरस्य। तदिदमयुक्ताङ्गाधिकत्वं लिङ्गज्ञानस्य साध्यधर्मविषयत्वलक्षणाङ्गानङ्गीकारात्। अविषयवृत्तित्वं वा लिङ्गज्ञानं ह्यङ्गमेव, न तु साध्यधर्मविषयतयेति। एतेनाप्राप्तिसमा निरस्तैव। अपि च सर्वथैवाप्राप्तस्यासाधकत्वं साक्षादप्राप्तस्य वा प्रथमे सिद्धसाधनं द्वितीयस्त्वनुपपन्नः पीडने चाभिचारात्। अभिचारात् पीडने दृष्टमेतद् यत् साक्षादप्राप्तस्यापि साधनत्वमिति। सोऽयं युक्ताङ्गत्यागः। अन्वयव्यतिरेकवत्याः परस्परप्राप्तेरवधीरणादिति ॥ ८ ॥

**[1]दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ।**

---

समवधानं, तत्र कार्यमिति नियम इत्यर्थः। ननु व्याप्यज्ञानाद् व्यापकतयाऽवगतं सिध्येन्नच विशेषो वस्तुतो व्यापकोऽपि तत्तयावगतस्तथात्वे च व्यर्थमनुमानमित्याशङ्कते विशेषत इति। सामान्यज्ञानहेतोरपि पक्षधर्मतासाचिव्याद्विशेषज्ञानोपपत्तेर्विशेषस्य व्यापकत्वाज्ञानेऽपि न काचिदनुपपत्तिरिति परिहरति न हीति। लिङ्गेनेति। न हीति निष्पत्तेर्दर्शनादनुमितेरित्यर्थः। प्रतिपत्तीति, द्विविधं हि विषयत्वतदीयमात्रस्वरूपविषयरूपं प्रतिपत्त्यनुबन्धित्वमुक्तमेकं तथाविधव्यापकजनकत्वरूपं व्यापारानुबन्धित्वमपरं तदिह द्वितीयमस्त्येवेत्यर्थः। सर्वत्रेति, व्यापारस्यैव विषयनियामको हेतुरित्यर्थः। साध्यधर्मप्रतिपत्त्यनुबन्धित्वं विषयित्वं गमकत्वेनाङ्गमित्याह लिङ्गज्ञानस्येति। ननु प्राप्तिसमाऽप्राप्तिसमान्तर्भूतैव प्राप्तेरत्रापि निरूपकत्वात्, मैवं प्राप्त्यप्राप्तिपुरस्काराभ्यां भेदात् एकजात्युद्भावनस्यापरजात्युत्थानबीजतयोपन्यासः ॥ ८ ॥

---

1. NS. 5. 1. 9.

अनवस्थाभासप्रसङ्गः प्रसङ्गसमः, अनवस्था च ज्ञप्तौ च कृतौ च। तथा च दृष्टान्तपदं व्यवस्थितत्वमुपलक्षयति। तदयमर्थः—कृतिज्ञप्त्योर्व्यवस्थितत्वस्य कारणं व्यवस्थापकं तस्यानपदेशात् प्रत्यवस्थानं प्रसङ्गसमः। तत्र ज्ञप्तौ प्रमाणेऽपि किं प्रमाणमिति वा, दृष्टान्तेऽपि को दृष्टान्त इति वा प्रवर्तते। किं पुनरेतदुत्थानबीजम्? अनिश्चितस्यानिश्चायकत्वारोपः। व्यञ्जितं चैतत् प्रमाणपरीक्षायां सूत्रकारादिभिः। लिङ्गस्य विशेषणान्तरवत् ज्ञातत्वमपि विशेषणं, तथा च तदपि ज्ञेयं तद्वदेवेत्यभिमानो वा। ततः पूर्वत्र स्वरूपासिद्धिः, उत्तरत्र विशेषणासिद्धिरारोप्या। कृतौ तु कारणस्यापि कारणान्तरं वक्तव्यं, न हि तत् सर्वथैव नित्यं कार्यस्यापि सदातनत्व-

---

अथ प्राप्तिबुद्धेः प्राप्तिनिरूप्यप्रसङ्गप्रतिदृष्टान्तधीहेतुतया व्यवस्थितनिरूप्यजाति-प्रकरणम्। ननु सूत्रमव्यापकं कारणेऽपि कारणं वाच्यं, प्रमाणेऽपि प्रमाणं वाच्यमित्यादिप्रत्यवस्थानासंग्रहादित्याह—अनवस्थेति। ननु नेदं जात्युत्तरं बीजाङ्कुरा-दावनवस्थापादने इष्टापत्त्यनवस्थाप्रसञ्जनस्य सदुत्तरत्वात्। मैवं, तत्कालव्यवस्थित-मेव परं तत्कालसाध्यव्यवस्थापकमित्यभिमानेनानवस्थापादनस्य स्वोक्तिव्यापकतया व्याघातकत्वात्। तथा च तत्कालव्यवस्थितमेव तदा व्यवस्थापकमित्यभिमानेन व्यवस्थापकानवस्थाप्रसञ्जनं प्रसङ्गसम इति लक्षणम्। ननु कारणानां कृतौ दृष्टान्त-पुरस्कारेण प्रवृत्तेस्तत्र कथं दृष्टान्तपदार्थेऽन्वय इत्यत आह—तथा चेति। कृतिज्ञप्ता-विति, सप्तमीद्विवचनान्तेन कृतिज्ञप्तिसाधारण्यमस्या जातेर्द्योतितं व्यञ्जयति। तत्रेति। नन्वेवं प्रश्नपरम्परायाः कथाया अपर्यवसाने तत्कालासिद्धेः कथावस्थानुपपत्तिरित्यर्थ-मभिसन्धाय पृच्छति किं पुनरिति। प्रमेयसद्भाववत् प्रमाणसत्ताऽपि प्रमाणाधीना, अन्यथा प्रमेये तदर्थसाधारणवैयर्थ्यादतोऽप्रमितस्याप्रमापकत्वमित्यभिमानान्नासम्भवदुक्ति-कत्वमस्या इत्यभिसन्धिनोत्तरम् अनिश्चितस्येति। लिङ्गस्येति, विशेषणान्तरं धूमादेः सातत्योर्ध्वगत्यविच्छिन्नमूलत्वादिकं यथा ज्ञातमुपयुज्यते तथा ज्ञातत्वमपि यद्विज्ञातं प्रमा-जननोपयोगि तद्विशेषणमपि तथाभूतं प्रतिज्ञातमेवोपयुज्यते इति व्याप्तेरित्यर्थः। पूर्वत्रेति, लिङ्गस्वरूपनिश्चयानुपपत्तौ स्वरूपासिद्धिरित्युपलक्षणम्, दृष्टान्तासिद्ध्या व्याप्यत्वासिद्धिः पक्षमात्रासिद्ध्या चाश्रयासिद्धिरित्याद्यपि द्रष्टव्यम्। उत्तरत्रेति। ज्ञातत्वरूपतदीयविशेषण-प्रमितत्वाव्यवस्थितावित्यर्थः। कृताविति ज्ञप्त्यनवस्थायां कृत्यनवस्था दृष्टान्तार्थं, न हि कथा घटाद्युत्पत्तिकालिका येन कारणानवस्था कथायामुद्भाव्येत। निर्णयादेरिव कथा-फलत्वान्नहीति। यद्यपि कादाचित्कसहकारिसहितस्य नित्यस्यापि हेतुत्वं निर्दोषं तथापि सामग्रीमध्यासीनं यावत्कारणं तावन्मध्ये यदि नैकमप्यागन्तुकं तदैकमासादनं

प्रसङ्गात्, नाप्याकस्मिकं हेतुतद्वतोरपि सदातनत्वप्रसङ्गात्, नापि स्वस्मादेव स्वस्मिन् वृत्तिनिरोधात्; कार्यस्यापि स्वत एवोत्पत्तिप्रसङ्गाच्च। नाप्यसत एव कारणत्वं प्रागपि कार्योत्पत्तिप्रसङ्गात्। एवं कारणकारणेऽपि चिन्तनीयम्। विपरीतप्रसक्तिका च तृतीया प्रसङ्गसमेति केचित्। तद्यथा भूतले घटो नास्तीति। नाप्राप्तं प्रतिषिध्यत इति घटप्राप्तिप्रसङ्ग इत्येवमादि। तदशिष्यं, सूत्रस्यैवं भावयितुमशक्यत्वात्; प्राप्तिसमायामन्तर्भावाच्च। ज्ञाप्यमपि हि द्विविधं विधेयं प्रतिषेध्यञ्च। ज्ञापकमपि हि करणादिष्वन्यतमत्, ततः प्रतिषेधज्ञापकं करणमधिकरणं वा न प्रतिषेध्यमप्राप्य, तस्य प्राप्तिनिवृत्तिलक्षणत्वात्। ततः प्राप्य वक्तव्यम्। तदपि नास्ति अविशेषात्। को विशेषः? सत्त्वमिति। एतदप्यसाम्प्रदायिकं भाष्यकारादिभिरनुदाहृतत्वादिति चेत्, न, वार्तिककृतैव प्रत्युत्तरसूत्रे दर्शितत्वात्। यदाह—[1]'तदिदमुत्तरं प्राप्याप्राप्य वेति। अस्यापि प्रतिषेध्यं प्राप्य वा अप्राप्य वा समानो दोष' इति। तस्माद् द्विविधैव प्रसङ्गसमा, सा चापाततोऽनवस्थालक्षणप्रतिकूलतर्कदेशनाभासा। हेतुपर्यन्तचिन्तायां पक्षेऽप्रसिद्धविशेषणविशेष्योभयत्वेन, हेतौ स्वरूपासिद्धत्वेन, दृष्टान्ते साध्यसाधनोभयविकलत्वाप्रसिद्धा-

---

द्रष्टव्यम्। आकस्मिकमिति हेतुनिषेधो वा भवननिषेधो वा स्वार्थहेतुत्वार्थं वा निरुपाध्यहेतुत्वं वा, तत्रादौ निराकरोति हेतुतद्वतोरिति। तृतीयमुद्भाव्य निराकरोति नापीति। उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तेरप्रभुत्वादिति भावः। तुरीयमुद्भाव्य दूषयति नापीति। तर्हि कारण-कारणमङ्गीकरिष्याम इत्यत आह एवमिति। विपरीतेति। विपरीतप्रसक्तिर्निषेधग्राहकादेव निषेध्यप्रसक्तिरित्यर्थः। ननु प्राप्तिसमसूत्रमपि नैवं भावयितुं शक्यमिति सुकरं प्रत्यवस्थातुमित्यत आह ज्ञाप्यमपीति। अधिकबलत्वेति, अधिकरणज्ञानमप्यभावनिरूपकमिति मतमास्थायोक्तं तस्येति, तस्य प्रतियोगिप्रतिक्षेपैकरूपत्वात् प्रतियोगिज्ञानाधीनज्ञानत्वादिति यावत्। नन्वनुदाहृतत्वमतन्त्रम्, उदाहरणानामानन्त्याल्लक्षणसत्त्वासत्त्वं तत्र चिन्त्यताम्, तथाप्येतदसदुत्तरग्रहानुगुणा सूत्रव्याख्या तत्रात्र वा क्रियतामिति विनिगमनायां को हेतुरित्याशयेन विशेषविनिगमकमाह यदाहेति। प्राप्तिसमाप्रत्युत्तर इति शेषः। विशेषणेति। विशेषमात्रग्राहकप्रमाणचिन्तायां विशेषणासिद्धिरेव, विशेष्यादावपि हेतौ विशेषणद्वारिका स्वरूपासिद्धिरेव। विशिष्टस्य हेतुत्वादिति न तत्र हेतुविवक्षा अप्रसिद्धेरिति साध्यसाधनोभयविशिष्टानां भूता व्यक्तिराश्रयः, एतस्योपलक्षणत्वेन पक्षव्याप्त्यादिग्राहक-

---

1. Cf. NV. 5. 1. 8.

श्रयत्वेन तद्देशनाभासा, एवं व्यतिरेकेऽप्यूहनीयम्। किं पुनरेतदुत्थानबीजम्? कारणापेक्षामुखेनासत्त्वारोपः।

प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रतिदृष्टान्तसमः। प्रतीपमवस्थानात् प्रतिपक्षावस्थानादिति प्रयोज्यव्यापारमभिप्रेत्य। प्रयोजकव्यापारचिन्तने तु प्रतिदृष्टान्तेन केवलेन प्रतिपक्षावस्थानादिति। स्थापनाहेतोः प्रतिषेधः प्रतिदृष्टान्तसम इति, एवं पञ्चम्युपपत्तिः। प्रयोजको हि प्रतिदृष्टान्तः, प्रयोज्यो हि जातिवादी, तस्य व्यापारः प्रतिषेधः। वस्त्वर्थौ लक्षणभेदं सूचयति। इयञ्च बाधप्रतिषेधाभ्यां द्विधा। केवलप्रतिदृष्टान्तबलेन प्रवृत्तेः प्रतिधर्मप्रकरणसमाभ्यां भिद्यते। किं पुनरुत्थानबीजमत्र? न हि युक्त्याभासमनन्तर्भाव्य प्रतिदृष्टान्तमात्रेण प्रतिरोधबाधावभिधातुमर्हत्यतिप्रसङ्गात्। सत्यमेवं हि मन्यते जातिवादी। येन धर्मेण यथात्वं दृष्टान्तस्य तेन तथात्वमुपसंहर्तुमुचितं दार्ष्टान्तिकस्य। तद् यथा, यथा देवदत्तो दीर्घस्तथा यज्ञदत्तोऽपीति, न तु यथा चैत्रः काण-

---

मुखप्रत्यवस्थानसंग्रहः। व्यतिरेकेऽपीति, व्यतिरेकव्याप्तावपीत्यर्थः। तत्रापि साध्यसाधनोभयव्यावृत्त्याश्रयाप्रसिद्धया दृष्टान्तदूषणसम्भवादिति भावः।

पूर्वं ज्ञप्त्यनवस्थाबीजं पृष्टमिदानीं कृत्यनवस्थाबीजं पृच्छति। ननु सामान्यलक्षणस्थप्रत्यवस्थानपदावृत्त्या सर्वत्र सामञ्जस्ये प्रत्यवस्थानादिति पञ्चम्यन्तमनुपपन्नं किमर्थमित्यत आह—प्रतीपमिति। प्रतीपे प्रतिपक्षत्वमालम्ब्य प्रतिदृष्टान्तेन कर्त्रा वादिप्रयोज्ये नानवस्थानादवस्थितभजनाद्यप्रत्यवस्थानमिति पूर्ववत् पूर्वकारणे घटे कारणात् घटवन्तो देशा इतिवत् प्रतिदृष्टान्तेन प्रतिपक्षभावमालम्ब्यावस्थानादिति क्रिया प्रधानम्। प्रयोजकेति। प्रयोजको जातिवादी, तद्व्यापारो विवक्षा, तत्रावस्थानादित्यन्तर्भावितण्यर्थम्। यद्यपि प्रतिषेधपदमत्र न श्रूयते, तदध्याहारे च गौरवं, प्रत्यवस्थानादित्यस्य प्रथमाविपरिणामेनैवोपपत्तेः, तथापि प्रत्यवस्थानपदं सामान्यलक्षणस्थमन्यत्रैवात्राप्यनुवर्तनीयं विपरिणामापेक्षया तस्य लघुत्वात् क्लृप्तत्वाच्च, ल्यब्लोपे पञ्चमीति तेन प्रतिदृष्टान्तप्रतिपक्षावस्थानमालम्ब्येत्यर्थ इत्यन्ये। इयञ्चेति, प्रतिदृष्टान्तस्याधिकरणबलत्वविवक्षायां बाधस्तुल्यत्वविवक्षायां प्रतिरोध इत्यर्थः। एवं हीति, यत् कृतकं तदनित्यमित्युदाहरणेन कृतकत्वमुपसर्जनतयाऽनित्यत्वं प्राधान्येनोपनीतमिति, तथा चायमित्युपनयेऽपि तच्छब्देन दार्ष्टान्तिके प्रधानमेवानित्यत्वमिति द्रष्टव्यं प्रधानमेवातिदिशतीत्युत्सर्गाव्युत्पत्तेः। एवञ्च घटोऽनित्यः तथा शब्दोऽनित्य इत्यतिदेष्टव्यम्, न तु तथा कृतक इत्यर्थः। तदनुरूपं निदर्शयति तद् यथेति। उपलक्षणं चैतत्

स्तथा मैत्रः खञ्ज इति। तद्वदनेनापि वादिना यथाऽनित्यो घटस्तथा शब्दोऽपीत्युपसंहार्यं न तु यथा घटोऽनित्यस्तथा चायं कृतकः शब्द इति। न ह्यनेन साधनं प्रधानीकृत्य दृष्टान्तस्य यथात्वमुपदर्शितं तस्माद्धेतुवादेऽप्रधानमनङ्गमेवातिदेश इत्यभिमानो बीजमत्रेति। एवञ्च प्रवर्तते यदि घटदृष्टान्तबलेनानित्यः शब्दोऽथाकाशदृष्टान्तबलेन नित्य एव किं न स्यात्, न चास्ति कश्चिद् विशेषः। येन घट एव दृष्टान्तो नाकाशमिति प्रतिरोधपक्षे। बाधपक्षे तु घटदृष्टान्तेन नानित्यः शब्द इति। आकाशदृष्टान्तबलेन नित्यस्यैव सिद्धेरिति। तदस्य हेतोरप्रधानत्वेनानङ्गत्वाभिमानो द्वारं, दूष्यो दृष्टान्तः, बाधप्रतिरोधावारोप्यौ, तद्देशनाभासा चेयमिति ॥ ९ ॥

[1]प्रसङ्गसमदोषचर्चासूत्रम्—

**[2]प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः।**

इहैवं प्रत्युत्तरक्रमः। ज्ञातस्यैव ज्ञापकत्वमिति किमिदं युक्तिसिद्धं लोकसिद्धं वा। नाद्यः, युक्त्यैव व्यभिचारात्। न द्वितीयः, प्रदीप उपादीयमाने प्रसङ्गाभावात्। भावे वा दृश्यदर्शनं लोके न स्यात्। मा भूदिति चेत्, जातेरनुत्थानं व्याघातात्। लिङ्गस्य हि ज्ञातत्वं तावदवश्यं ज्ञेयं, विशेषणत्वादिति चेत्, न, साध्यविपर्ययसंसर्गव्यवच्छेदकानामेव विशेषणानां ज्ञाननियमाभ्युपगमात्, न तु सहकारितामात्रोपयुक्तानामपि। एवमनभ्युपगमेऽपि दूषणानुत्थानमेव व्याघातात्।

---

सर्वोपसंहारविशेषव्याप्त्योर्दोषप्रदर्शनं दृष्टान्तस्य साधकत्वे हेतुयोगोऽप्रयोजको व्यतिरेकदृष्टान्ते व्यभिचारादित्यभिमानश्च बीजमत्र दूष्यो दृष्टान्त इत्युपलक्षणं बाधपक्षे पक्षस्यापि दूष्यत्वात् ॥ ९ ॥

हेतोरनङ्गताभिमानात् तद्दूष्यता नास्त्येव। ज्ञातस्यैवेति तत्कालज्ञातस्यैवेत्यर्थः, ज्ञातत्वमात्रस्य केवलान्वयित्वात्। युक्त्यैवेति। अनवस्थाभयेनैवेति भावः। प्रदीप इति प्रदीपज्ञापकचक्षुरादेस्तत्कालज्ञानाभावाद् व्यभिचारो द्रष्टव्यः। प्रदीपस्यापि ज्ञातस्य ज्ञापकत्वाज्जातेरिति तदुत्थानबीजस्यापि तत्कालज्ञातत्वाभावादिति भावः। लिङ्गस्येति। ज्ञातत्वस्य लिङ्गं प्रमित्युपयोगिविशेषणत्वादिति भावः। साध्यविपर्ययेति, व्यभिचार-

---

1. सिद्धे दृष्टान्तहेत्वादौ साधन-प्रश्नपूर्वकम्।
अनवस्थाभासवाचः प्रसङ्गसम-जातिता ॥—*TR.*

2. NS. 5. 1. 10.

तस्माल्लोके यथा घटादिप्रतिपत्त्यर्थं प्रदीपोपादानं न तन्निश्चायकपरंपरां प्रसञ्जयति तथा हेतुदृष्टान्तोपादानमपीति। तदिदमयुक्ताङ्गाधिकत्वं ज्ञातत्वनियमस्य ज्ञापकानङ्गस्यैवाङ्गत्वेन स्वीकारात्। अविषयवृत्तित्वं वा लिङ्गसहकारिमात्रेष्वपि लिङ्गांगस्य ज्ञातत्वस्य प्रवर्तनादिति। कृतौ तु किं परापेक्षैव दोषः अपेक्षाया-मसिद्धिर्वा, न प्रथमः, तथाभूतेनापि प्रदीपेन लोकव्यवहारस्य तथात्वविचारेण परीक्षक-व्यवहारस्य सिद्धेः। अनुत्थानं वा जातेः। द्वितीये तु किमसिद्धापेक्षायामसिद्धिः, सिद्धापेक्षायामपि वा, प्रथमे सिद्धसाधनं द्वितीये सूत्रमुत्तरम्। तथानभ्युपगमे वा तस्याप्यसिद्धेर्व्याघातः। तदिदमविषयवृत्तित्वम्। अनवस्था दूषणं भवत्येव न तु सिद्धविषयेति ॥ १० ॥

अथ प्रतिदृष्टान्तसमे—

### [1]प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः।

व्यावर्तकानामित्यर्थः। न च चक्षुस्तैजसं रूपादिषु रूपस्यैव व्यञ्जकत्वादित्यसिद्धिवार-कत्वेन व्यभिचारावारकस्यापि रूपादिष्वित्यस्य ज्ञातत्वाभ्युपगमात् तथा गौरवमिति प्रत्यक्षं जन्यविशेषेण ज्ञानजन्यं जन्यविशिष्टज्ञानत्वादित्यत्र विशिष्टपदव्यवच्छेद्याविशिष्ट-ज्ञानाप्रसिद्ध्या तद्व्यावर्तकत्वाभावात्। तत् कथमेतत्? इदमत्र तत्त्वं, येन विशेषणेन विना व्याप्तिर्ग्रहीतुं न शक्यते, तस्यैव ज्ञातत्वेनोपयोगः, व्यभिचारवारकविशेषणस्यापि ज्ञाने तदेव तन्त्रम्। रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यत्र रूपादिष्विति विशेषणं विना न शक्यते, तस्यैव रूपस्यैव व्यञ्जकत्वादित्यस्य वस्तुन एवासत्त्वात् रूपादिष्विति विशेषणस्यापि ज्ञानम्। एवं जन्यविशिष्टज्ञानत्वादित्यत्र विशिष्टेति विशेषणं विना जन्यज्ञान-मात्रस्य विशेषणज्ञानजन्यत्वव्याप्तिरनवस्थया ज्ञातुं न शक्यते इति तस्यापि ज्ञातत्वं विशेषणेन विना व्याप्तिर्ग्रहीतुं न शक्यते, न तद्विशिष्टे व्याप्तिर्न वा तस्य ज्ञातत्वम्, यथा शरीराजन्यत्वनीलवृत्तित्वादाविति, साम्प्रदायिकास्तु व्यभिचारवारकविशेषणानां ज्ञातत्व-नियमोऽन्येषां तदनियम इत्येतत्परोऽयं ग्रन्थ इत्याहुः। [2]नन्विति, आत्मनो योगादीना-मित्यर्थः। अनुत्थानं वा जातेरित्यर्थात्, अथेत्यत्र दोष ऊह्यः। सूत्रमित्यनुषज्यते। अभि-मन्येति क्वचित् पाठः। स तु 'मन स्तम्भ' इत्यस्य चौरादिकस्य नित्यण्यन्तत्वेन समाधेयः। 'वा ल्यपी'त्यत्र मास्ते विकल्पो नष्टे नित्यमनुनासिकलोपो व्यवस्थितभाषात्वादिति वृत्तिकृता दर्शितत्वात् ॥ १० ॥

1. NS. 5. 1. 11. 2. MS. 'नन्विति'.

 

इहैवं प्रत्युत्तरक्रमः। किं प्रतिदृष्टान्तस्याधिकबलतामभिमन्य दृष्टान्तस्य बाधो देश्यते अन्यथा वा। नाद्यः। साधनप्रयुक्तसाध्यधर्मवत्तामवधीर्य वादिप्रतिवादिविवक्षितधर्मवत्तामात्रेण दृष्टान्तयोर्विशेषाभावात्। न द्वितीयः, को हि तुल्यबलयोर्बाध्यबाधको वा तथा स्वीकारे वा दृष्टान्तेनैव प्रतिदृष्टान्तबाधोऽभ्युपगन्तव्यः स्यादिति व्याघातः तदिदं साधारणमेव दुष्टत्वमभिधेयं सूत्रस्य तात्पर्यं च युक्ताङ्गहीनत्वं बाधं प्रत्यधिकबलत्वस्य युक्ताङ्गस्यानपेक्षणादिति। प्रतिरोधे तु विशेषग्रहे प्रतिरोधस्तदग्रहे वा? नाद्यः। दृष्टान्तस्य हीनत्वग्रहे तस्यैव वाच्यत्वात्, प्रतिदृष्टान्तस्य हीनत्वग्रहे प्रतिरोधस्याशक्यत्वात्। द्वितीयस्तु नास्त्येव दृष्टान्तस्य हेतुना परिगृहीतत्वात्। प्रतिदृष्टान्तस्य तद्धीनत्वात्। तदयमर्थः—प्रतिदृष्टान्त एव हेतुः प्रतिदृष्टान्तहेतुः। नाधिकस्ततो हेतुरस्तीति यावत्। तस्य तथात्वे दृष्टान्तोऽपि यद्यधिकहेतुशून्यः स्यात्, प्रतिरोधो भवेत्, न त्वहेतुरविद्यमानहेतुर्दृष्टान्त इति। हेतुमत्तालक्षणो विशेषो नाङ्गमतिदेशे दर्शित इति चेत्, तर्हि रासभो यथा न दूषणं तथा प्रतिदृष्टान्तोऽपीति प्रसक्तौ स्वोक्तिव्याघातः। तदिदं युक्ताङ्गहीनत्वं, हेतोर्युक्ताङ्गस्यैवानपेक्षणात्। अगृह्यमाणविशेषत्वं वा प्रतिरोधाङ्गं तस्यानपेक्षणादिति ॥ ११ ॥

**[1]प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः।**

यस्य कस्यचित् साधनाङ्गस्योत्पत्तेः प्राक् कारणस्य हेतोरभावात् प्रत्यव-

---

दृष्टान्तस्येति, दृष्टान्तस्य हीनत्वग्रहे सप्रतिरोधोद्भावनं तत्र प्रतिरोधिकायास्तुल्यबलत्वबुद्धेरभावादिति भावः। नन्वधिकरणेनापि स्वेच्छयाऽन्यबलस्य प्रतिरोधोद्भावने को दोषः पुरुषेच्छाया अनियमात्, अत्राहुः। उद्भावनप्रयोजिकायास्तुल्यबलत्वबुद्धेराहार्यरूपाया अप्यावश्यकत्वम्, अन्यथा व्यभिचारेण तद्बुद्धेरहेतुत्वप्रसङ्गः। दृष्टान्तस्येति। केवलेन दृष्टान्तेन न सत्प्रतिपक्षता दृष्टान्तस्य हेतुसत्त्वेऽप्यधिकबलत्वात्। तदयमर्थ इति तस्मिन् पक्ष इति शेषः। जात्युत्थानबीजमुत्थाप्य निराकरोति—हेतुमत्त्वेति ॥ ११ ॥

व्यवस्थितनिरूप्यजातिप्रकरणस्य व्यवस्थितप्रकरणनिरूप्याभावधीहेतुत्वादनन्तरमनुत्पत्तिसमप्रकरणम्। यस्य कस्यचिदिति। ननु ध्वंसदशायां हेत्वभावेन हेतुवैकल्पोद्भावनेन

---

1. NS. 5. 1. 12.

स्थानमनुत्पत्तिसमः। एवं धर्मि-लिङ्ग-साध्य-दृष्टान्त-तज्ज्ञानानामनुत्पत्तिर्व्याप्यते। तत्राद्यमुदाहरणं भाष्यादौ, आश्रयभागासिद्धिपर्यवसितञ्च तत्, द्वितीयन्तु गुर्विदं पतनवत्त्वादित्युक्ते पतनोत्पत्तेः प्रागवस्थो भागासिद्धो हेतुः तदापि गुरुत्वस्य विवक्षितत्वेन तदवस्थस्यापि पक्षे अन्तर्भावादिति। तृतीयं गन्धवदिदं पार्थिवत्वादित्युक्ते प्रथमे क्षणे गन्धस्याव्यापकस्यानुत्पत्तिरसिद्धो हेतुः, सिद्धौ वा बाधितविषयः स्यादिति। चतुर्थं द्रव्यमात्मा गुणवत्त्वाद्घटवदित्युक्ते प्रथमक्षणे अनुत्पन्नगुणावस्थो घटः, स एव निर्गुणः, तथाच दृष्टान्तभागासिद्धो हेतुरिति। पञ्चमं द्रव्यं वायुः स्पर्शवत्त्वादित्युक्ते अज्ञातस्यापि वायोर्द्रव्यत्वं विवक्षितं, न च तत्रायं हेतुरुपलब्धवृत्तिरिति अज्ञातभागासिद्धो हेतुरिति। एवं सर्वमेतद् भागासिद्धिपर्यवसितमिति अनुत्पत्तिधर्मकञ्च कथमनित्यं, निःपतनञ्च कथं गुरु, अगन्धवच्च कथं पार्थिवं, निर्गुणञ्च कथं द्रव्यम्, अनुपलब्धहेतुकञ्च कथं साध्यधर्मवदिति विरोधपर्यवसितञ्चेति। तद्देशनाभासा चेयमिति यो यदर्थमुपादीयते तस्यानुत्पन्नस्य तत्रासामर्थ्यं द्वारम्। अत्र दूष्यो हेतुरिति ॥ १२ ॥

---

प्रत्यवस्थानं तदव्यापकमेतत्। अत्राहुः—असदवस्थायां तदवृत्तित्वेन तदङ्गवैकल्पोद्भावनमनुत्पत्तिसमः। अत्र यथाऽसदुक्तिविशिष्टे प्रयत्नानन्तरीयत्वं न वर्तते तथा शब्दत्वविशिष्टेऽपि तत्र तन्न वर्तते। तथाच लिङ्गस्य पक्षतावच्छेदकधर्मसामानाधिकरण्याभावादपक्षधर्मत्वमिति। जात्युत्तरसंग्रहाय विशेषणान्तरवति तदवृत्तित्वेन तत्प्रमाणाङ्गवैकल्पोद्भावनमनुत्पत्तिसम इति लक्षणमिति संप्रदायविदः। एवं धर्मीति, उपलक्षणत्वेन धर्मादिविशेषणानुत्पत्तिरपि द्रष्टव्या। आद्यमिति, यथा शब्दो नित्य उत्पत्तिधर्मकत्वादित्युक्ते प्रागुत्पत्तेः शब्दे नायं हेतुरित्याश्रयभागेऽसिद्धो हेतुरित्यर्थः। धर्मिविभागस्यासिद्धया हेतोस्तत्रावृत्तिर्न तु स्वापरावादित्याद्योदाहरणम्। ननु शब्दमात्रस्य पक्षीकृतत्वान्न भागासिद्धिः, न ह्यनुत्पत्तिदशाकः शब्दः पक्षो येन तदवृत्तित्वाद्भागासिद्धिः स्यात्, एकत्वे पक्षस्यासिद्धिरेव न भागे तदभावः। सकलकालीनपक्षीकरणे सद्दूषणमेव, न जातिः, शब्दानुत्पत्तिदशाकपक्षत्वारोपेण च्छलमेव, अनारोपे तु तत्त्वानवकाश एवेति। अत्राहुः—उत्पन्नानुत्पन्नयोर्भेदेनानुत्पत्तिदशाकस्य पक्षत्वारोपाद् भागासिद्धिदेशना, साऽसद्दूषणं, शब्दस्य च तत्र तात्पर्यासञ्चारेण न च्छलत्वमिति। ननूत्पत्तिमत्त्वमनित्यत्वं च कालगर्भावेतौ कथं कस्मिंश्चित् काले व्यवह्रियते इत्याशयेन यथामूलं ग्रन्थस्वरसमभिसन्धाय प्रकारान्तरमाह—'अनुत्पत्तिधर्मकं चे'त्यादिना 'विरोधमात्रपर्यवसितञ्चे'त्यन्तेन। विरोधो हि निग्रहस्थानभेदः। उत्पत्तिप्राक्काले कारणाभावादुत्पत्तिर्नास्तीति नित्यत्वसिद्धौ तद्विरुद्धानित्यत्वोपगमव्याघात इत्यर्थः ॥ १२ ॥

दोषचिन्तासूत्रम्—

[1]तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारण-प्रतिषेधः ।

इहैवं प्रत्युत्तरक्रमः । न तावदनुत्पन्नोऽनुत्पत्तिसमा न समयतया पक्षोऽस्माकमभिमतो येन देश्यावकाशः स्यात्, यो हि यदा स्वयमेव नास्तिकस्तस्य तदातनत्वेनाश्रयतामिच्छेत्, तत् कुत आश्रयासिद्धिः ? तथापि शब्दमात्रपक्षीकरणे कथं तद्दशाकस्य पक्षत्वव्यवच्छेदः ? तत् किं तथापि शब्द एवासौ न तर्हि नास्ति तथा चोत्पत्तेः प्रागिति व्याघातः । अशब्द एव तर्हि तथावस्थः स्यादिति चेत्, नैतदेवं व्याघातादेव तत्स्वभावस्य कालान्तरेऽपि स्वाभाववत्

---

अथाश्रयस्य साधनाङ्गस्योत्पत्तेः प्राक् साधनधर्माभावेनाश्रयभागासिद्धिपर्यवसितिप्रत्यवस्थानं तदावकाशमादाय यदि, तदाप्याश्रयत्वं परस्याभिमतं स्यान्न चैवमित्याह—न तावदिति । शङ्कते—तथापीति । न चासदुत्पत्तिदशायामेव परं, न तु शब्दोऽपीति वाच्यं, तथात्वे त्वनुत्पन्नः शब्दो विनष्टः शब्द इति सामानाधिकरण्यानुपपत्तेः । न हि विशेषणविशेष्य-तत्सम्बन्धानामभावे विशिष्टप्रतीतिः सामानाधिकरण्यं वेत्यनुत्पत्त्यादिवत् तत्कालीनः शब्दोऽभ्युपगन्तव्यः ; न च तदानीमुत्पत्तिधर्मकत्वमस्तीति तदवस्थैवाश्रयभागासिद्धिः । न च तथाप्यसतः कथं धर्मित्वमिति वाच्यं, यदि ह्यसन्न धर्मस्तदा कथमसन्नेवेत्युच्यते तस्यापि वचसो यत्स्वभावधर्मत्वाभिधायित्वात् । अभावो भूतलस्य धर्मो न घटस्येति चेत्, न भूतले सन् घटोऽसन् घट इति तुल्यायां प्रतीतौ कथं सत्त्वं घटधर्मो नासत्त्वमिति नियामकाभावादिति भावः । निराकरोति—तत् कथमिति । एवं सति रूपादिकमपि तस्यां दशायामसत्त्वमिति च किमिति धर्मो न स्यात् । अथाशब्ददशायां प्रमातो न तथानुपलम्भात् तत्सम्बन्धे सत्त्वमुपाधिरिति सत्त्वधर्मस्य ते धर्मास्तर्हि शब्दधर्मत्वमपि तथेति कथं शब्दपदात्तदवस्थलाभ इति भावः । न तर्हीति । रूपादीनामिव शब्दत्वस्यापि सत्त्वोपाधिकत्वादिति भावः । यदि च तस्यामप्यवस्थायां सत्ता, तदा नित्यत्वस्य प्रामाणिकत्वादुत्पत्तौ विरोधिनोत्पत्तेः प्रागित्यत्र विरोध इत्याह, तथा चेति । ननु सत्त्वौपाधिकत्वमेव न शब्दत्वस्य, तथा हि योऽसौ नास्ति स शब्दो न वा, आद्ये न सिद्धोपाधिकत्वं शब्दत्वस्य, अन्त्ये शब्दो न शब्द इति प्राप्तमिति शङ्कते । अशब्द एवेति, प्रसज्यप्रतिषेधो यदि नञर्थस्तदा शब्दाभावः । पर्युदासनञर्थतापक्षे शब्दादन्यार्थस्तदन्यतरस्यापि शब्दतादात्म्यस्वीकारे व्याघात इत्याह । नैतदेवमिति । ननु सत्त्वोपाधिकत्वे शब्दत्वस्य शब्दाभाव इत्यत्रासतः शब्दस्य विशेषण-

---

1. NS. 5. 1. 13.

स्वेतरतादात्म्यानुपपत्तेः । तस्मात् स्वसमयभाविना रूपेण कालान्तरभाविनं स्वाभावमुपलक्षयतीति भावः । तथा चेदानीमनुत्पन्नो घटः शब्दो वा, स एव नष्टो वा नास्ति वेति कोऽर्थः ? तस्याभावोऽस्तीति, स पुनरव्यपदेश्य एव, न चाव्यपदेश्यस्याधिकरणतया साध्यसाधनभावः शङ्कितुमपि शक्य इत्यास्तां विस्तरः। तदिदमुक्तमुत्पन्नस्य तथाभावादिति । तदिदमविषयवृत्तित्वम् असिद्धत्वं दूषणं वक्तुमुचितमेव, न तु तस्यापक्षो विषयः, न चानुत्पन्नः पक्ष इति । हेतौ तु यदा तदोत्पन्नस्य पतनादेस्तथाभावादिति हेतुभावात् सिद्धव्याप्तित्वादिति यावत् । कारणस्योत्पत्तेर्लिङ्गस्योपपत्तेर्न कारणाप्रतिषेधः पक्ष इति शेषः, एतदुक्तं भवति, यस्य लिङ्गस्यैकदा वर्त्तमानस्य त्रैकालिकेन साध्येन प्रतिबन्धसिद्धिः तस्यैकदा सिद्धस्यैवोपसंहारात् तथाभूतसाध्यसाधकत्वोपपत्तौ नानुत्पत्तिविनाशदशायामसिद्धिः क्षतिमावहति । तदातनतयाऽनुपसंहारेऽपि तदातनार्थसिद्धेः, यो ह्येकदा पतनवान् स सर्वदा गुरुरिति हि व्याप्तिः, अव्याप्तौ वा न तदातनतया पक्षोऽपीति किमसिद्धिः करिष्यति । तदिदं युक्ताङ्गहीनत्वं व्याप्तिप्रकारमपेक्ष्यासिद्धेर्दूषणत्वात् । अस्य च तदनपेक्षप्रवृत्तेरिति । एतेन साध्यदृष्टान्तद्वारिके व्याख्याते । यथायोगं सूत्रयोजना । साध्यो युक्ताङ्गहीनत्वं व्यापकरूपानपेक्षणात् । दृष्टान्तेऽपि व्याप्यरूपानपेक्षणात् तज्ज्ञाने तूत्पन्नज्ञानस्य ज्ञातस्येति यावत् । तथाभावात् पक्षभावात्, हेतुभावात्, दृष्टान्तभावादिति । एतदुक्तं भवति—द्विविधा ह्यनुमानप्रवृत्तिः, सम्भावनातो निश्चयाच्च, तत्र यस्य यथा प्रवृत्तिस्तस्य तथा ज्ञानविषयस्यैवोप-

---

भावानुपपत्तिरित्याशङ्क्य उपलक्षकभावेन समाधत्ते—तस्मादिति । ननु चासत्त्वदशायां शब्दः शब्दो न वेति प्रश्नमात्रेण व्याघात इत्यत्राह—स पुनरिति । यः सन्नेव न भवति, स तद्विशेषाभ्यां शब्दतदभावाभ्यां कथं व्यपदेश्य इत्यर्थः । नन्विति, अपक्षेऽसिद्धिरदूषकत्वादिति भावः । अस्य चेति जात्युत्तरस्येत्यर्थः । यथायोगमिति । यथायोगः कदाचित् पतनवान् स यावत्सत्त्वं गुरुरिति व्याप्तिस्तदा यो यदा कदाचिद्गन्धवान् स यावत्सत्त्वं पार्थिव इति व्याप्तिरेवं यो यदा कदाचिद् गुणवान् स यावत्सत्त्वं द्रव्यमित्यपि व्याप्तिरित्येतदर्थिका सूत्रयोजनिका कर्तव्या इत्यर्थः । तदेव स्फोरयति—साध्य इति । तदा तदोत्पन्नगन्धादव्यापकत्वं तदा तदोत्पन्नस्य गुणवत्त्वादेर्व्याप्यत्वं चानपेक्ष्य प्रकृतजात्युत्थानादिति भावः । तत्र यस्येति । सम्भावितोऽहंसाधनसम्बन्धसाध्यसम्बन्धोऽपि सम्भाव्यमानतयैवानुमानविषयो निश्चितसाधनसम्बन्धे

न्यासात् तद्विपरीतस्यापक्षादिभावेऽपि न प्रकृतहानिः, उपन्यासानुरूपस्य निर्दोषत्वात्। तदिदमविषयवृत्तित्वम् अज्ञानं पक्षादेर्दोष एव न त्वनुपन्यस्तस्य पक्षादिभावो न चापक्षादेरज्ञानं दोषः, अन्यथा सर्वत्र व्याघातादनुत्थानमूहनीयमिति ॥ १३ ॥

**[1]सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः।**

समान इत्यन्तमुदाहरणार्थम्। शेषस्योपलक्षणमर्थः। तेन सपक्षासपक्षोत्थापकधर्मादिति सूत्रविपरिणामः। एवं विषयतोऽनुमानान्तरेऽपि कारणतोऽनेकधर्मादेरपि संशयसमव्याप्तिः। तदयमर्थः—निर्णयकारणोपक्षेपे सति संशयकारणेन प्रत्यवस्थानं संशयसमः। एवञ्च प्रवर्त्तते यथा निर्णयकारणमस्तीति निर्णयः स्यात्तथा संशय-

---

तु निश्चीयमानतयैवेत्यर्थः। उपन्यासास्वरूपस्येति। वाद्युपन्यस्ते हि धर्मो, हेत्वादौ दोषो वाच्यः, नत्वनुपन्यस्ते। एवं दूषणेऽपि, तस्य ततोऽन्यत्वादित्यर्थः। यदि चान्यदूषणे त्वन्यदपि दूष्यते, तदा तवापि व्याघात इत्याह—अन्यथैवेति ॥ १३ ॥

अनुत्पत्तिवत् संशयस्यापि विरोधिनिरूप्यत्वेनाभावनिरूप्यत्वमित्यनन्तरं संशयसमलक्षणम्। ननु निर्णयहेतुसत्त्वेऽपि संशयहेतोः संशयापादनं संशयसम इत्येतावन्मात्रे वक्तव्ये सामान्य इत्यादिकमप्रयोजकमित्यत आह—समान इत्यन्तमिति। उदाहरणं दृष्टान्तः, स च दूष्यान्वयिहेतोरित्यर्थात्। ननु मानान्तरेऽपि तुल्यन्यायतया संशयसम एवमसाधारणधर्मादेरपि, तथाच नित्यानित्येति साधर्म्यादिति च विशेषोपादानमयुक्तमित्यत आह—शेषस्येति। विषयत इति। नित्यानित्यत्वान्यविषय इत्यर्थः। निर्णयकारणे यद्यपि संशयकारणमात्रात् संशयापादन उत्कर्षसमत्वं तथापि सन्देहकारणमात्रेण निर्णयकारणमात्रप्रतिबन्धात् प्रत्यवस्थानं संशयसम इति लक्षणम्। अत्र संशयपदमसम्यग्ज्ञानोपलक्षणं तेनाग्निनिर्णायकाद् यथाग्निनिर्णयस्तथा सादृश्यादियत्किञ्चिद्भ्रमकारणादग्निभ्रमः कुतो न स्यादिति प्रत्यवस्थानस्य संग्रहस्तस्य जात्यन्तरेऽन्तर्भावात्। तथा च निर्णयकारणाक्षेपान्मिथ्याज्ञानकारणेन प्रत्यवस्थानमप्रमितसम इति केचिदाहुः। तन्न, विषयान्तरे मिथ्यानापादनेऽर्थान्तरत्वात् स्वपक्षे विषय-तदापादने मतानुज्ञाप्रवेशात् दूष्यहेतुसाध्यविषय-

---

1. NS. 5. 1. 14.

कारणमस्तीति संशयेन भवितव्यम्, अन्यथा कारणसद्भावेऽपि संशयवन्निर्णयोऽपि न स्यात्, अविशेषात्। अस्ति च संशयकारणं समानानेकविप्रतिपत्तीनामन्यतमत्, न च वाच्यमुभयमप्यस्तु, एकस्यैकस्मिन्निर्णयानिर्णयरूपविरुद्धोभयसंसर्गेण भेद-प्रसङ्गात्। तदत्र संशयकारणमेव द्वारं हेतुदूष्यः कार्यापेक्षया सत्प्रतिपक्षत्व-मारोप्यं तदाभासा चेयमिति। ज्ञाप्यापेक्षया च विशेषणासिद्धिरारोप्या तदाभासा चेयमिति। संशयहेतुविरहे सति निर्णायकत्वमित्यभिमानात्॥ १४॥

दुष्टत्वमूलचर्चासूत्रम्—

**[1]साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्त-संशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः।**

साधर्म्यं संशायको धर्मो वैधर्म्यं निर्णायको धर्म इति निर्णायकाभावे संशयहेतुः। संशयं करोति यदि तु तद्भावेऽपि कुर्यादत्यन्तसंशयः स्यात्। अस्त्वेवमेवेत्यत आह—नित्यत्वेति। नित्यं संशयकारणत्वानभ्युपगमाच्च सामान्यस्य। मया तावदेवमेवाभ्युपगम्यत इति चेत्, अन्ततः कार्य-कारणभावेऽपि स्वीकारान्निर्णयस्य अस्वीकारे वा जातेरनुत्थानं व्याघातादित्यर्थः। तदिदं युक्ताङ्गहीनत्वम्। विशेषादर्शनस्य संशयकारणस्य युक्तस्यैवानपेक्षणात। अयुक्ताङ्गाधिकत्वं वा साधर्म्यादिविरहस्यायुक्तस्यैव निर्णयाङ्गत्वेन स्वीकारात्,

---

तदापादनस्य तद्बाधविरहेणाशक्यत्वात्, उपदेशपरम्परया लक्षणनिश्चयो न च भ्रमापादने संशयसमव्यपदेशस्तु स्यात्तस्य जातित्वेऽप्यन्यत्वाकृतिगणजातौ तदन्तर्भाव इत्यन्ये। कृति-ज्ञप्तिसाधारण्यमेतज्जातेराह—कार्यापेक्षयेति। सत्प्रतिपक्षत्वमनुमितिरूपकार्यप्रतिबन्धः, अप्रतिबन्धादेव निर्णयहेतोर्निर्णयसद्भावात्, अत एव तात्पर्यपरिशुद्धौ कार्यापेक्षया प्रतिबन्धदर्शनाभासेत्युक्तमित्यर्थः। तर्ह्यनुमाने किं दूषणमित्यत आह—ज्ञाप्यापेक्षयेति। विशेषणासिद्धिं विवृणोति—संशयहेतुविरह इति॥ १४॥

अन्तत इति प्रवृत्तिहेत्विष्टसाधनताज्ञाने तज्जातीयत्वलिङ्गस्यानिर्णायकत्वाङ्गीकारे तस्याप्युक्तप्रत्यवस्थानेन ग्रासादित्यर्थः। जातेरिति, जातिवाक्यस्य कारणत्व-बाधात्, तथा च न कार्यकारणभावः, प्रतिपादयसि चेति वाङ्मनोविसंवादः।

---

1. NS. 5. 1. 15.

तस्मान्न कार्यापेक्षया सत्प्रतिपक्षत्वं संशयकारणस्य व्यङ्ग्यत्वात्, नापि ज्ञाप्यापेक्षया विशेषणासिद्धिः। साधर्म्याद्यभावस्य हेतुविशेषणत्वस्यानभ्युपगमात्। ननु संशयसमाव्यभिचारदेशनाभासेति केचित्। तत् कथं, प्रमादात्। न हि स्वरूपतो व्यभिचारदेशनेयं नापि विकल्पसमावदन्यव्यभिचारसञ्चारेण, नापि निर्णयहेतुरेव संशयं करोत्विति न्यायेन फलत इति ॥ १५ ॥

[1]**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः।**

साधर्म्यादित्यस्य प्रतिपक्षसाधकोपलक्षणमर्थः, प्रक्रिया प्रक्रियमाणोऽर्थः, तस्य सिद्धेर्निश्चयात् तेन स्थापनाहेतौ प्रयुक्ते अभ्युपगततदनधिकबलत्वेन प्रमाणान्तरेण हेतोर्बाधाभिधानं प्रकरणसम इति सूत्रार्थः। उदाहरणमनित्यः शब्दः कार्यत्वादित्युक्ते, नैतदेवं नित्य एव यतः सिद्धः श्रावणत्वात्, न चेदिदं बाधकं कार्यत्वमपि न साधकं प्रमाणत्वाविशेषात्। एवं प्रत्यक्षादिभिरपि बाधो यथात्रैव नैवं प्रत्यभिज्ञानबाधितत्वात्, न चेदिदं बाधकं न तत् साधकमविशेषादिति। तदत्र प्रतिप्रमाणं द्वारं हेतुदूष्यः, बाधितत्वमारोप्यं तदाभासा चेयमिति। शेषमशेषं साधर्म्यसमावत् ॥ १६ ॥

दुष्टत्वमूलं तु चिन्त्यते—

[2]**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः।**

प्रतिपक्षसाधनात् स्थापनानधिकबलादपि प्रकरणसिद्धेः हेतोः स्वसाध्यसिद्धिद्वारा स्थापनाप्रतिषेधस्यानुपपत्तिः प्रतिपक्षोपपत्तेः। उत्तरापेक्षया स्थापनैव प्रतिपक्षः तस्यान-

---

व्यङ्ग्यत्वादिति, विशेषदर्शनाभावरूपसहकारिरहितत्वादित्यर्थः। फलत इति, व्यभिचारफलः संशयस्तदापादने व्यभिचारापादनमेव कृतमिति तदस्यामुदाकृष्य हेतुकारणं संशयमापादयेत्, न चैवं सम्भवति, तस्य निर्णयहेतुत्वादित्यर्थः। बाधदेशनाभासप्रकरणसमस्याप्यभावनिरूप्यत्वेन सङ्गतिः ॥ १५ ॥

वैधर्म्यप्रत्यवस्थानाव्यापकत्वमाशंक्याह—साधर्म्यादिति। ननु प्रक्रिया पक्षजिज्ञासा च प्रकरणसमोद्भावने सति स्यात्तथा च प्रत्युत्तरसूत्रं विशेषद्योतने स्यान्न त्वेवं तत्र बाधापादनादित्यत आह—प्रक्रियेति। प्रतिधर्मसमातो भेदमाह—तस्येति। प्रक्रियासिद्धेरिति पञ्चमी, तत्र तद्धर्मविपर्ययोपपत्तेरिति तादर्थ्यषष्ठीति ततो भेद इत्यर्थः ॥ १६ ॥

स्थापनेति। यद्यपि यत्र हेतोरप्रयोगे स्थापनामात्रप्रयोगस्तत्र स्थापनाया-

---

1. NS. 5. 1. 16. 2. NS. 5. 1. 17.

धिकबलेन प्रतिरुद्धादप्यपेक्षितसिद्धिरिति त्वदभ्युपगमवशेनैवोपपत्तेः। अनभ्युपगमे वा न बाधसिद्धिः। सोऽयं साधारणो व्याघातः। असाधारणन्तु युक्ताङ्गहीनत्वं बाधं प्रत्यधिकबलवत्त्वस्य युक्तस्यैवानपेक्षणात् ॥ १७ ॥

[1]त्रैकाल्यासिद्धेर्हेतोरहेतुसमः।

कृतिज्ञप्तिसाधारणीयं जातिः। पूर्वं पश्चात् सह वेति विकल्पोपक्रमः। तत्र सहभावेऽविशेषादहेतुः। पूर्वापरभावे त्वेकतरसम्बन्ध्यनुपपत्तेः साध्यसाधनोपहितरूपत्वात् साधनसाध्ययोः कः पुनरस्याः प्राप्त्यप्राप्तिसमाभ्यां भेदः ? साध्यसाधन-

मुत्तरस्यानधिकबलवत्त्वाभ्युपगमेन बाधाभिधानाज्जातेरव्यापकमेतत्, तथापि प्रमौपयिकरूपवत्तयानभ्युपगतोत्कर्षेण बाधोद्भावनं प्रकरणसम इति लक्षणं, शेषमिति न चायं केवलमिव स्वयोज्यानुयोग इत्यादि दुष्टत्वादित्यादि तत्रत्यमिति भावः। नन्वधिकबलसाधनप्रतिषेधेऽपि स्थापनोपपत्तेरिति विरुद्धमित्यत आह—[2]त्वदभ्युपगमेति। यद्यपि प्रतिधर्मसमावत् साधर्म्यवैधर्म्यभेदेन प्रकरणसमाया अपि भेदः सम्भवति, तथापि तत्र साधर्म्यवैधर्म्यपुरस्कारेण विभागोऽत्र तु न तथेति सूत्रकारकृतिवैचित्र्येणोन्नीयते। अभावमात्रनिरूप्यपूर्वजात्यपेक्षया अस्या हेतुसाम्याभावे विशेष्यनिरूप्यतया संगतेः ॥ १७ ॥

कृतिज्ञप्तीति। यथा घटादिपूर्वं दण्डादिसाधनस्वीकारे साध्योपहितस्वरूपस्य साधनस्योपधायकभावेनानुपपत्तिस्तथा दण्डादिपूर्वं घटादिस्वीकारे साधनघटितमूर्तेः साध्यत्वस्यानुपपत्तिः, सहभावे च तयोः सव्येतरविषाणवत् साधनभावानुपपत्तिः, तथा धूमादेर्ज्ञापकस्य साध्यज्ञानात् पूर्वं साधनज्ञाने साध्यघटितमूर्तित्वात्तस्य तदज्ञाने तद्वदज्ञानं साध्यस्यैव पूर्वं ज्ञाने तस्य साधननिरूप्यत्वे तदज्ञाने तदपि दुरधिगमं सहज्ञाने च ज्ञाप्यज्ञापकभावानुपपत्तिरिति हेतुपदस्य कारकज्ञापकसाधारणस्य प्रयोगादुक्तिसम्भवस्तुल्य इत्यर्थः। ननु त्रैकाल्यासिद्धिः पूर्वमनुपस्थितेः कथं तया प्रत्यवस्थानमित्यत आह—पूर्वमिति। विकल्पेनोपक्रमो विकल्पोपक्रमः, यद्यपि पूर्वापरसहभावान्यतमेनापि प्रत्यवस्थानसम्भवात्त्रैकाल्यखण्डनेन प्रत्यवस्थानमहेतुसम इति लक्षणमतिव्यापकम्, तथापि त्रैकाल्यमुदाहरणमात्रं समयसम्बन्धमात्रेण हेतुविरोधापादनमहेतुसम इति लक्षणम्। ननु कार्यज्ञाप्यभेदभिन्नसाध्यप्राप्त्यप्राप्तिभ्यां विकल्पेन प्रत्यवस्थानात् कार्यकारणभावप्रतिक्षेपप्राप्त्यप्राप्तिसमातः कथमस्या भेद इत्याशङ्कते—कः पुनरिति। कार्यकारणभावप्रतिक्षेप-

1. NS. 5. 1. 18. 2. MS. 'तदभ्युप-'.

भावप्रतिषेधस्योभयत्रापि तुल्यत्वादिति चेत् ? तत्र स्वरूपतः सन्निकर्षासन्निकर्षचिन्ता इह तु कारणतः, ते अर्थद्वारिके इयं शब्दद्वारिका, ते हि विकल्पोपक्रमे, इयं त्रिविकल्पोपक्रमा। तत्र सहकारिशक्तिर्दूष्या इह स्वरूपशक्तिः, ते विशेषणासिद्धिदेशनाभासे, इयं प्रतिकूलतर्कदेशनाभासेति। पूर्वभावे हि तदसाधनत्वप्रसङ्गः, पश्चाद्भावे हि तदसाध्यत्वप्रसङ्गः। सहभावे साध्यसाधनभावाभावप्रसङ्ग इति प्रतिकूलतर्कमात्रोक्तिपर्यवसानात्। इतरेतराश्रयप्रसङ्गे च तात्पर्यात्। तदत्र प्रतिकूलतर्कोद्भावनं द्वारम्, हेतुहेतुमद्भावो दूष्यः, तर्कप्रतिघातश्चारोप्यः, तदाभासा चेयमिति ॥ १८ ॥

दोषमूलन्तु चिन्त्यते—

**[1]न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः।**

---

साधारण्येऽप्यवान्तरभेदकान्द्वेदस्तमाह—तत्रेति। तत्र साधकं साध्येन सन्निकृष्टमन्यथा वेति स्वरूपतश्चिन्ता, इह तु साध्यकालीनस्येत्यर्थः। यद्यपि तत्रापि साध्यावाचकालः(?) प्राप्याप्राप्येति कालतः सन्निकर्षचिन्ता भवत्येव, तथापि तत्रत्ययथाश्रुतविकल्पानुरोधादेतदुक्तम्, ते अर्थद्वारिके इति प्राप्तो न साधनं दण्डभावचक्रे अप्राप्तो न साधनम्। हिमवानिव विन्ध्य इत्यर्थे इति रूपप्राप्त्यप्राप्ती तत्र द्वारमिह तु साध्यसाधनोपहितत्वात् साध्यसाधनशब्दयोरिति प्रत्यवस्थानं द्वारमित्यर्थः। यद्यपि तयोरपि शब्दाभिहितसाध्यसाधनद्वारा प्रवृत्तिरस्त्येव, रूपान्तरेण तस्या अपि शब्दद्वारकत्वं नास्तीत्यविशेषः, तथापि तत्र कार्यकारणभावमङ्गीकृत्य विशेषेऽतिप्रसङ्गापादनमिह तु कार्यकारणभावपदार्थ एव दूष्यत इति भावः। [2]ते हि विकल्पोपक्रमे इति। यद्यप्यत्रापि सहभावासहभावादिविकल्पेन द्विविकल्पोपक्रमत्वमस्ति, तथाप्युदाहरणविशेषमभिप्रेत्य तदुक्तम्। सहकारीति। यद्यपि प्राप्त्यप्राप्त्योः कारणभावावच्छेदकत्वेन सहकारित्वं तथापि तत्र तयोः सहकारित्वमारोप्य दूषणमत्र कारणस्वरूपमेव दूष्यते इत्यर्थः। इयं प्रतिकूलेति। यद्यपि प्राप्त्योरप्यविशेषातिप्रसङ्गापादनाभ्यां प्रतिकूलतर्काभासत्वं सम्भवत्येव, तथाप्यविशेषादतिप्रसङ्गादिति पञ्चम्या अविशेषादिर्दूषणप्रयोजकत्वमभिधीयते। नन्वेतयोरेव दूषणत्वमिति विशेषणासिद्धिरेव तत्राप्यापाद्या। प्रतिकूलतर्काभासत्वं विवृणोति—पूर्वभाव इति। पदार्थं व्याख्याय तात्पर्यार्थमाह—इतरेति। साध्यसाधनयोरन्योन्याधीनात्मना पर्यवसाने नैकमपीत्यर्थः ॥ १८ ॥

---

1. NS. 5. 1. 19. 2. MS. 'तद्विकल्पोप-'.

त्रैकाल्यासिद्ध्या किल जातिवादी हेतुफलभावमिहाक्षिपति, न च त्रैकाल्यासिद्धिर्यथायथं त्रिकालयुक्ता हेतुतः साध्यसिद्धिदर्शनात्। अतएव भग्नव्याप्तिकतया निर्मूलास्तर्का इत्यर्थः। तदिदं युक्ताङ्गहीनत्वं ज्ञप्तिपक्षे तर्कप्रवृत्तिं प्रत्यङ्गभूताया व्याप्तेरनपेक्षणात्। कृतिपक्षे तु त्रैकाल्यासिद्धिः, हेतुतः पूर्वकालयुक्तात् साध्यस्योत्तरकालयुक्तस्य सिद्धेः। असति साध्ये कस्य तत् साधनमिति चेत्, साध्यस्यैव। असतः कथमुपाधित्वमिति चेत्, व्यवहारं प्रति बुद्धिसिद्धत्वात् व्यापारं प्रति तूपधानानुपयोगः स्वभावशक्तेः स्वत एव नियतत्वात्। भिन्नकालयोः कथं सम्बन्ध इति चेत्, सम्बन्धस्यैवास्यैवंस्वभावत्वात्। पौर्वापर्यनियमो हि कार्यकारणभावः, तदिदमनङ्गाधिकत्वं न हि भिन्नकालत्वनियमे समानकालता युक्ता विरुद्धत्वादिति। यद्वा पूर्ववदङ्गहीनत्वम्। सम्बन्धस्य सहभावेन व्याप्त्यसिद्धेः। अविषयवृत्तित्वं वा सहभावेन सम्बन्धो व्याप्यत एव किं त्वविरुद्धो न तु विरुद्धोऽपि व्याप्तिविषय इति ॥ १९ ॥

---

ज्ञप्तिपक्षदोषपरीहारपरतया सूत्रं व्याचष्टे—यथायथमिति। पूर्ववदादिभेदस्वीकारेण ज्ञाप्येन त्रिकालयुक्ताद्धेतोर्ज्ञापकात्। साध्यसिद्धेर्ज्ञाप्यसिद्धेरित्यर्थः। ननु प्रागमभिसाध्ये(?) विशिष्टपदार्थवाचि साधनपदप्रयोगः कथमित्याशयवानाशङ्कते—असतीति। गूढाभिसन्धेरुत्तरम्—साध्यस्यैवेति। शङ्कितः स्वाशयमुद्घाटयति—असत इति। समाधाता स्वाभिसन्धिमभिव्यनक्ति—व्यवहारमिति। व्यवहारो हि न साध्यस्वरूपसाध्यः किन्तु तद्विषयज्ञानसाध्यः। विषयविषयिणोर्विशेषणविशेष्यभावव्यवस्थया अनन्यगतिकतया तथाभूतत्वेनैवाङ्गीकारादित्यर्थः। ननु साध्यसिद्ध्यनुगुणव्यापारजनने विशेषणत्वमसतः साध्यस्य कथमित्यत आह—व्यापारमिति। तत्राप्युक्तिप्रधानस्य साध्यसम्बन्धस्यानुपयोगो वक्ष्यमाणक्रमेणान्यथैवोपपत्तेरित्यर्थः। ननु घटकारणं दण्ड इत्यत्र घटो न विशेषणमसत्त्वात् नोपलक्षणं कारणमात्रस्योपलक्ष्यत्वेऽतिप्रसङ्गात्। घटे कारणस्य तथात्वे उक्तदोष इत्यत आह—स्वभावशक्तेरिति। घटेन सह पौर्वापर्यलक्षणः सम्बन्धो नियामक इत्यर्थः। ननु संयोगसमवायादेः सम्बन्धस्य समानकालयोरेव दर्शनाद् भिन्नकालयोश्च सदसतोः कथं सम्बन्ध इति शङ्कते—भिन्नकालयोरिति। ज्ञानज्ञेययोर्भिन्नकालयोरपि स्वीकारान्नायं नियमः, प्रामाणिकतया तदङ्गीकारे प्रकृतेऽपि तुल्यत्वात्, अन्यथा तवापि व्याघात इति शङ्कते। समाधत्ते—सम्बन्धस्यैवेति। अविरुद्ध इति, संयोगादिरित्यर्थः। न तु विरुद्ध इति, एककालीनयोर्नियतपौर्वापर्यविरोध इत्यर्थः ॥ १९ ॥

[1]प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ।

स्वोक्तिव्यापनात् साधारणो व्याघात इत्यर्थः ॥ २० ॥

[2]अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ।

उक्तस्य विपरीताक्षेपशक्तिरर्थापत्तिः, ततस्तदाभासात् प्रतिपक्षसिद्धेः प्रत्यवस्थानादर्थापत्तिसमः इत्यर्थः । स च बहुप्रकारः । तथा हि—शब्दोऽनित्य इत्युक्ते अर्थादापद्यते नान्योऽनित्य इति । विशेषविधेः शेषनिषेधविषयत्वात् । तथा च साध्यविकलो दृष्टान्त इति विरोधः । अनित्यसाधर्म्यात् अनित्य इत्युक्ते अर्थादापद्यते नित्यसाधर्म्यान्नित्य इति प्रतिरोधः । अनुमानादनित्य इत्युक्ते अर्थादापन्नं प्रत्यक्षान्नित्य इति बाधः । सामान्यवतोऽस्मदादिबाह्यकरणग्राह्यत्वादित्युक्ते अर्थादापन्नं तदभावान्नानित्य इति । न च सर्वः शब्दोऽस्मदादिप्रत्यक्ष इत्यसिद्धिः । अस्मिन्नेव हेतावुक्ते कृतकत्वमनित्यत्वसाधकं न वा । न चेदिदमपि कथं साधकमविशेषात् । साधकञ्चेदुच्यते अर्थादापद्यते नान्यत् साधकमिति

---

स्वोक्तीति । त्वदुक्तरीत्या प्रतिषेधाभावे कथं तेनान्ये(?) बाध इत्यर्थः ॥ २० ॥

अनुपपत्तिविषयत्वेनार्थापत्तेरभावनिरूप्यत्वात् सङ्गतिः । नन्वर्थापत्तेः प्रमाणत्वात्तया प्रत्यवस्थानं सदुत्तरमेवेति न जातिरित्यत आह—तदाभासादिति । तथानुपपत्त्याभासेन स्वव्याघातकत्वमुत्तरमर्थापत्तिसम इति लक्षणम्, अतो न व्याघातं विना केवलनिरनुयोज्यानुयोगेऽतिव्याप्तिः । नन्वर्थादित्यस्य न तावच्छब्दमहिम्नेत्यर्थः, तत्र शब्दस्याव्यापारात् अन्यथा सर्ववाक्यानां विधिनिषेधरूपार्थद्वयरूपत्वे भेदप्रसङ्गः, नातिव्याप्तेरित्यर्थः । शब्दानित्यत्वे नान्यनित्यत्वाव्यापनादित्यत आह—विशेषविधेरिति । अन्यव्यवच्छेदेनैव विशेषणभाव इत्यभिमानो जातिवादिन इत्यर्थः । विरोध इति साध्यविरोध इति व्याप्तत्वमित्यर्थः । व्यभिचारमाह—सामान्यवत इति । य एवम्भूतः सोऽनित्य इत्युक्तेऽर्थादापद्यते वस्तुतो नानित्य इति, अत्र व्यभिचारः पार्थिवपरमाणुरूपादीनामनित्यत्वादित्यर्थः । अन्ये त्वेवं योजयन्ति, ननु क्व तदभावान्नित्य इत्यत आह—न च सर्व इति । तन्न, तद्वत्त्वस्य पूर्वत्र हेतुतया व्याख्याने सर्वहेत्वाभासोदाहरणानापत्तेः । तस्मात् स्वातन्त्र्येणासिद्धिप्रदर्शनपरत्वेनेत्थं व्याख्येयम्—शब्द एवम्भूत इत्युक्तेऽर्थादापद्यते नानेवम्भूतोऽत इति । तच्चासिद्धमाद्यादिशब्दानामनेवम्भूताभावात् । नन्वसिद्धिपदेनात्र भागासिद्धिरभिप्रेता

---

1. NS. 5. 1. 20.
2. NS. 5. 1. 21.

सर्वदोषोपसंहारः । एवमनैकान्तिकत्वमसिद्धत्वमित्यादि । तदस्यानुक्ताक्षेपो द्वारं, हेतुदूष्यः, असिद्धत्वाद्यन्यतमदारोप्यं, तदाभासा चेयमिति ॥ २१ ॥

दुष्टत्वमूलं चिन्त्यते—

**[1]अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ।**

इहैवं प्रत्युत्तरक्रमः । उक्तोपपादकमनुक्तमर्थादापद्यते अनुक्तमात्रं वा ? आद्ये, युक्ताङ्गहीनत्वं प्रकृतोक्तस्यानुक्तेनाव्यापनात् । अव्यापकस्य चानुपपादकत्वात् । तदिदमुक्तमनैकान्तिकत्वादिति । द्वितीये, स्वोक्तिव्यापनाद्व्याघातः । तदिदमुक्तमनुक्तस्यानुक्तमात्रस्यार्थापत्तेः पक्षहानेः स्वपक्षहानेरुपपत्तिः कुतोऽनुक्तत्वात् दूषणोपाधिसमाक्रान्तत्वादित्यर्थः । वादजल्पयोश्च वादिसाधनवत् प्रतिवादिसाधनमपीयमर्थापत्तिरभिसंप्लवत इति नैकान्तव्यवस्थितेयम् । तथा च प्रत्याख्येयत्वाददूषणत्वाभ्युपगमेन व्याघातः । अप्रत्याख्येयत्वे वा स्वसाधनस्य स्वयमेवानभ्युपगमाद् वादजल्पकथाव्याघातः । तदिदमुक्तमनैकान्तिकत्वादिति ॥ २२ ॥

**[2]एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ।**

---

सदुत्तरत्वेन जातित्वानापत्तेः । सर्वदोषेति । सामान्येनासाधकत्वेन सर्वेषां दोषाणामुपसंहार इत्यर्थः, असाधारणतत्तद्रूपेणाप्यापादनमाह—एवमिति । तद् यथा कृतकत्वमनैकान्तिकन्न वा, आद्ये अर्थादन्येषामनैकान्तिकत्वाभावे प्रमेयत्वमप्यनित्यत्वसाधकं स्यात्, अन्ये त्वर्थादापन्नमनैकान्तिकं इति प्रकृतहेतोरनैकान्तिकत्वमिति । एवमन्येष्वपि हेत्वाभासापादनं बोद्धव्यम् ॥ २१ ॥

दूषणोपाधीति । उक्तानुक्तमात्राक्षेपकत्वं दूषणोपाधिः । 'अनैकान्तिकत्वाच्चे'ति सूत्रैकदेशमनुक्तमात्राक्षेपकत्वपक्षे योजयति—वादजल्पयोरिति । वितण्डायां वादिनः साधनाभावादिति भावः । 'वादिसाधनवदि'ति द्वितीयासमर्थत्वाद्वतिः । तथा चेति । प्रतिसाधनाभिसंप्लवे प्रत्याख्येयत्वात् । प्रकृतार्थापत्तेस्तयेति शेषः ॥ २२ ॥

अस्याभावनिरूप्यत्वेन सङ्गतिः । न त्वेकधर्मेत्याद्ययुक्तं लक्षणेऽनुपयोगात् व्यतिरेकेण

---

1. NS. 5. 1. 22.
2. NS. 5. 1. 23.

एकधर्मोपपत्तेरविशेष इति जातिवादिनोऽनुशयोद्घाटनं जात्युत्थान-क्रमदर्शनाय प्रत्यवस्थानाकारमाह—"सर्वाविशेषप्रसङ्गादि"ति । तत् किं साधनधर्मोपपत्तेरेव, नेत्याह । "सद्भावोपपत्ते"रिति । तथा चोत्कर्षसमातो भेदः । धर्मान्तरोपलक्षणञ्चैतत् । प्रमेयत्वद्रव्यत्वादिनाऽपि सम्भवात् । अविशेष-समा चेयं जातिः । उत्कर्षसमादीनामेकत्वं किञ्चित्साधर्म्यादिति वार्त्तिक-दर्शनाच्च सर्वशब्देन च पुनरत्वोपपादकधर्माक्रान्तः समुदायो विवक्षितः । अविशेषस्त्वेकत्वमेकधर्मवत्त्वमेकाकारधर्मवत्त्वं वेति । तेनायमर्थः । यत्र कस्मिं-श्चित् समुदाये सत्ताद्येकतमं साधनादन्यं धर्ममुपलभ्य तद्बलेन तस्य समुदायस्य धर्मतः स्वरूपतो वा एकाकारत्वमापादयति साऽविशेषसमेति । एवं प्रवर्तते—यदि कृतकत्वलक्षणैकधर्मोपपत्तेर्घटशब्दयोरनित्यत्वलक्षणोऽविशेषः स्यात्, अथ सद्भाव-लक्षणैकधर्मोपपत्तेस्त्रैलोक्यस्यैवाविशेषः किन्न स्यात् । किञ्चातः ? तादात्म्येनाविशेषे पक्षाद्यविभागः । तज्जातीयत्वेनाविशेषे जातिसङ्करप्रसङ्गः, अवान्तरजाति-

---

स्थापनायामव्यापकत्वाच्चेत्यत आह—एकधर्मेति । यद्यप्येतल्लक्षणपरत्वेनाप्युपपाद्यते, तथाप्यविशेष इति निमित्तपञ्चमीत्वेन व्याख्याने वा द्विसाध्याविशेषनिमित्तकधर्मान्तर-कृतमविशेषापादनमविशेषसम इति, तथापि व्यतिरेकस्थापनायामव्याप्तिः स्यादितीत्थं व्याख्येयम्, यद्यपि अनुशयबीजस्य चैकदेशेऽप्युपपत्तेः । अत्र सर्वत्वमविवक्षित-मनाकाङ्क्षितत्वात् । तेनैकदेशाविशेषापादनेन जात्यन्तरापत्तिः । सूत्रे सद्भावः सत्त्वं तन्मात्रस्य नानिष्टापादकत्वम् । किन्त्वनेकवृत्तिधर्ममात्रस्येत्याह—धर्मान्तरेति । मुख्यार्थपरित्यागे वार्त्तिककृतः सम्मतिमाह—अविशेषसमा चेयमिति । उत्कर्षसमादिजातिप्रस्ताव इति शेषः । सद्भावमात्रस्याविशेषापादकत्वे तदसङ्गतं स्यादित्यर्थः । ननु सर्वाविशेषप्रसङ्ग इति वक्ष्यमाणे(?)वत्वोदाहरणाव्यापकमित्यत आह—सर्वशब्देनेति । तेन सर्वत्राविशेषः सर्वाविशेषो विवक्षितः, न तु सर्वेणाविशेष इत्यर्थः । अव्याप्तिभयेनैवाविशेषं व्याचष्टे—अविशेषस्त्विति, साधना-दन्यमित्युत्कर्षसमव्यावृत्तये । ननु यत्र साध्येनैव साधनेनैवापक्षमात्रे दृष्टान्तमात्रे-णैवाऽनभिमताविशेषापादनं तदव्याप्तिः । मैवम्, धर्ममात्रस्यानिष्टापादनसामर्थ्यमित्यभि-मानोद्यविरुद्धधर्मबलेनाविशेषरूपानिष्टप्रसञ्जनमविशेषसम इति विवक्षितत्वात् उत्कर्ष-प्रतिधर्मसमयोस्तु साधनपुरस्कारेणानुवृत्तव्यावृत्तधर्मपुरस्कारेण च प्रत्यवस्थानमिति ततो भेदः । एकत्वादिकमविशेषं क्रमेणोदाहरति—तादात्म्येनेति । त्रैलोक्यस्यैव जातीयत्वे सर्वा जातयः सर्वत्र सन्तीति सङ्करः । अन्यूनातिरिक्तव्यक्तिवृत्तिनानाजात्यङ्गीकारे वा,

विलोपो वा । तादृशाकारत्वेनाविशेषे गुणकर्मादीनामप्यनित्यधर्मसंसर्गः स्यादिति । द्रव्यत्वलक्षणैकधर्मोपपत्तेर्नवानामविशेषः क्रियावत्त्वं किं न स्यात् ऐन्द्रियकत्वलक्षणैकधर्मोपपत्तेर्वा घटशब्दयोरेव मूर्तत्वमविशेषः किं न स्यात् घटजातीयं वा घटतादात्म्यं वेति । न चेयं साधर्म्यसमा, प्रतिधर्मेण प्रत्यवस्थानात् । नापि विकल्पसमा । विकल्पेनानुक्रमात्, अनुपसंहाराच्च । नाप्युत्कर्षसमा, धर्मान्तरोपपत्त्या प्रत्यवस्थाने विशेषविरोधानुद्भावनादिति । तदस्याः कस्यचिद् धर्मस्य कञ्चिद्विशेषं प्रत्यसाधकत्वप्रदर्शनं जनकं हेतुर्दूष्यः, असाधकत्वमारोप्यं, तदाभासा चेयमिति । अन्ये त्विदं सूत्रमन्यथा व्याचक्षते । तथा हि एकधर्मोपपत्तेः साधनधर्मस्य प्रयोजकत्वादविशेषे साध्यधर्मवत्तालक्षणे पक्षदृष्टान्तयोः सर्वाविशेषः सर्वप्रकारेणाविशेषः प्रसज्येत सद्भावोपपत्तेरिति, साहित्यसद्भावोपपत्तेरिति ।

स च सर्वप्रकाराविशेषस्त्रिविधः, व्यक्तितः जातितः साध्यधर्मतश्चेति । यथा घटादौ कृतकत्वं तद्घटरूपत्वादिसर्वाकारसहचरितमुपलब्धमिहानित्यत्वं गमयत्तद्घटरूपतामपि गमयेत् अविशेषात् । न चेदनित्यतामपि न गमयेदिति । एवं घटत्वादि-

---

त्रैलोक्यजातिवृत्त्येकमेव सामान्यमस्त्विति नानावान्तरसामान्यविलोपप्रसङ्ग इत्यर्थः । **तादृशाकारत्वेने**ति । पूर्वत्र धर्मैक्यमत्र तु धर्मधर्मस्य, अनित्यो हि धर्मो गुणादिष्वापाद्यते । तत्रानित्यधर्मस्य कस्यचिदप्यनित्यत्वं धर्मस्तस्यैक्यं न च गुणादीनामनित्यधर्मकत्वमिष्यत इत्यर्थः । उपलक्ष्यमर्थमाह—**द्रव्यत्वे**ति । क्रिया स्पन्दः । इदानीं विपरीतक्रमेण सुखप्रतिपत्तये पूर्वोक्तत्रयमुदाहरति । **ऐन्द्रियकत्वे**ति । परिणामधर्मा ह्येकपरिच्छिन्नत्वं मूर्तत्वमित्यर्थः । **प्रतिधर्मे**ति । प्रतिधर्मेणैवेत्यर्थः । अत्र तु येन केनापि ततोऽस्य भेद इति भावः । तथापि यत्र प्रतिधर्मेणैव प्रत्यवस्थानं तत्र कथमसाङ्कर्यम्, सत्प्रतिपक्षाभिप्रायवैधुर्यात्, प्रकरणसमायां च बाधाभिप्रायवैधुर्यात् प्रतिधर्मकेणैव परमियं प्रवर्तत इति साम्प्रदायिकाः । **विकल्पेने**ति । अन्यत्र व्यभिचारदर्शनं विकल्पोपक्रमः, प्रकृते व्यभिचारापादनं विकल्पोपसंहार इत्यर्थः । **असाधकत्वमिति** निग्रहस्थानसाध्यासाधकत्वसामान्यापरिगणनेऽपि असाधकत्वसामान्यं हेत्वाभाससामान्यमारोप्यमित्यर्थः । हेत्वाभासानामप्यसाधकत्वेनैव दोषत्वात् । 'एकधर्मोपपत्ते'रित्यस्य व्याख्यानं साधनधर्मस्य प्रयोजकत्वनिश्चयादिति । तथा च एकधर्मः साधनधर्मः तस्योपपत्तिः प्रयोजकत्वमित्यर्थः । **साहित्ये**ति । हेतुमत्सहचार इत्यर्थः । **जातित इति** । जातिग्रहणं धर्ममात्रोपलक्षणम्, तेन नोपाध्यापादनाव्याप्तिः । यद्यपि साध्यमपि धर्मो व्यक्तिश्चेति पूर्वपदाभ्यामेव प्राप्यते,

सहचरितमुपलब्धं घटत्वसामान्यमपि गमयेदविशेषात् । एवं महानसे धूमस्तदग्निसहचरित उपलब्धः पर्वते वह्निं गमयंस्तमपि गमयेत्, न चेदेवं न गमयेदेवेति । तदशिष्यमुत्कर्षसमान्तर्भावात् । पक्षदृष्टान्तभेदस्थितावुत्कर्षप्रवृत्तिरिह तु न तथेति चेत्, न, जातिसाधर्म्याविशेषेऽपि धर्मिभेदस्थितेरविरोधात् । व्यक्त्यविशेषापादने भेदाभावादुत्कर्षाभाव इति चेत्, न, अतादात्म्ये सति तादात्म्यस्यैवोत्कर्षणीयत्वात्, अरजते रजतारोपवत् । कस्तर्हि साध्यदृष्टान्तयोर्धर्मविकल्पः ? तदतद्रूपतैवेति । न चैवं पूर्वोदाहरणसंग्रहः, न चायं न्यायसम्प्रदायः, तस्माद् यथान्यासमेवास्तु कृतमनुन्यासेनेति ॥ २३ ॥

दोषमूलानुसन्धानसूत्रम्—

**[1]क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ।**

क्वचित् सत्तादौ सति तस्य व्यापकतया यो धर्मस्तस्यानुपपत्तेः क्वचित् कार्यत्वादौ सति तस्य व्यापकतया यो धर्मोऽनित्यत्वादिस्तस्योपपत्तेः प्रतिषेधा-

---

तथापि गोवृषन्यायेनोक्तम् । पक्षदृष्टान्तेति । न हि भेदस्थितिमनुपजीव्य पक्षदृष्टान्तयोरविद्यमानधर्मासञ्जनमिति भावः । जातीति । जात्या घटत्वादिरूपया साधर्म्येण च दृष्टान्तगतव्यक्तिरूपेणाविशेषेऽपि पक्षदृष्टान्तयोर्व्यक्तितो भेदस्थितेरविरोधादित्यर्थः । तर्हि भेदापवादपक्षे का गतिरिति शङ्कते—व्यक्त्यविशेषेति । यथा रजतान्योन्याभावप्रतियोगिन्यरजते तदन्योन्याभावात्यन्ताभाव आरोप्यते तथा प्रकृतेऽपीति समाधत्ते ।

अतादात्म्य इति । न केवलमुत्कर्षसमान्तर्भावापत्त्या नायं सूत्रार्थोऽपि तु प्रागुपदेशितत्वोत्पादाहरणसंग्रहार्थे सूत्रान्तर्भावारम्भप्रसङ्गादपीत्याह—न चैवमिति । नन्वन्यधर्मस्यान्यत्र विशेषणोत्कर्षः सम्भूय विशेषणता चाविशेषस्तत् कथमुत्कर्षान्तर्भावान्तर्भावापत्तिरिति पूर्वापरितोषेणाह—न चैवमिति । मूलग्रन्थानां प्रथमोपदर्शितोदाहरणानुसारित्वम् । तथा च नैतादृश्यविशेषसमभिव्याहारः पूर्वेषां किन्तूक्तलक्षणविशिष्ट एवेत्यर्थः । यथान्यासमिति । अस्मद्व्याख्यायां सूत्रपदादेरेव चरितार्थतान्यासः, भवतान्तु शब्दासद्भावोपपत्तिशाब्दसाहित्यपदमध्याहृत्य सूत्रव्याख्यानं पश्चान्न्यासः । यद्वा, अर्थन्यासान्तश्चिरन्तननिबन्धनस्य व्याख्येयं तया कृतमलमित्यर्थः ॥ २३ ॥

व्यापकतयेति । अभिमतस्येति शेषः । एवमग्रे व्याप्यतयेत्यत्रापि । अतो

---

1. NS. 5. 1. 24.

भावः। एवं चार्थतः परिवर्त्य योजनापि क्वचिदविशेषमात्रे यथोक्ततद्धर्मानुपपत्तेः व्याप्यतया सत्तादेरनुपपत्तेः क्वचिच्चानित्यत्वादौ कार्यत्वादेस्तथोपपत्तेः प्रतिषेधाभावः। तदिदं युक्ताङ्गहीनत्वम्। प्रतिबन्धं युक्तमङ्गमनपेक्ष्य प्रकृतजातिप्रवृत्तेः, एवं हि प्रत्युत्तरक्रमः। किमयं सद्भावः कार्यत्वस्यासाधकत्वे दृष्टान्तः तत्साधकत्वे कार्यत्वं वा समानधर्मत्वादिति हेतुपरिगृहीतो वाऽविशेषे स्वतन्त्रं साधनं वा प्रसङ्गो वेति। न प्रथमः, केवलदृष्टान्तस्यासाधकत्वात्, अव्यवस्थानाच्च। न द्वितीयस्तत एव, व्याघाताच्च। न तृतीयचतुर्थौ, प्रतिबन्धासिद्धेः, तद्रहितस्य साधकत्वाभ्युपगमे स्वोक्तिव्याघाताच्च। पञ्चमस्तु यदि सत्त्वादविशिष्टं स्यादिति वा यदि कार्यत्वादविशेषः स्यात् सत्त्वादपि स्यादिति वा। न प्रथमः, व्याप्तौ सत्यां सिद्धसाधनात्। बाधेन विपर्ययापर्यवसानाच्च। अव्याप्तेरेव न द्वितीयः। न हि कृतकत्वानित्यत्वरूपाविशेषसाधकत्वं सत्त्वस्याविशेषसाधकत्वेन व्याप्तमिति। एतेनेश्वरानुमाने पशुत्वेन शशादीनां विषाणित्वाविशेषप्रसङ्ग इत्यादि व्याख्यातम्॥ २४॥

---

न तृतीयानन्वयो न वास्तवरूपप्रसङ्ग इत्यर्थः। एवञ्चेति। व्यापकधर्मोपपत्त्यनुपपत्तिकथनेन व्याप्यधर्मोपपत्त्यनुपपत्तिपरतयापि सूत्रव्याख्यापरिवर्तः। व्यापकसत्त्वोपहितसीमत्वाद्व्याप्यसत्त्वस्य तन्निवृत्तित एव निवृत्तिरत उक्तम्—अर्थत इति। तदेव दर्शयति—क्वचिदिति। किमयमिति। यथा सत्त्वं त्रैलोक्याविशेषेऽसाधकं तथा कृतकत्वमप्यनित्यत्वे साधकं तथा ससत्त्वमपि त्रैलोक्याविशेष इति दृष्टान्तमात्रस्य साधकत्वम्। यद्वा, कृतकत्वमनित्यत्वस्यासाधकं समानधर्मत्वात् सत्त्ववत्; सत्त्वस्य त्रैलोक्याविशेषसाधकत्वं समानधर्मत्वात् तथा कृतकत्ववत्। यदि वा त्रैलोक्यमविशिष्टं समानधर्मकत्वात् घटवदिति स्वातन्त्र्यं साधनम्। यद्वा, यदि कृतकत्वलक्षणो धर्मो नित्यत्वेनाविशेषं साधयेत्, सत्त्वमपि त्रैलोक्याविशेषं साधयेदिति प्रतिदृष्टान्तसमजात्यापत्त्या तेन दूषणदृष्टान्तेन तदीयदूषणव्याप्यतरत्वापत्तेरिति भावः। व्याघाताच्चेति। परोक्तहेतोरसाधकत्वसाधनायोद्यतस्तस्य दृष्टान्तीकरणेन साधकत्वमेव द्रढयतीति वाङ्मनसविसंवादादित्यर्थः। इष्टापत्तिप्रसङ्गदोषमाह—व्याप्ताविति। वस्तुतो व्याप्तिरेव नास्तीति भावः। बाधेनेति। तस्मान्न सदिति विपर्ययस्य सत्ताग्राहकमानबाध इत्यर्थः। एतेनेति। यदि साध्यसहचरितमात्रात् कार्यमात्रादहश्यकर्तृसिद्धिः, तादृशात् पशुत्वादपि शशे विषाणं सिध्येदित्यत्र न कार्यत्वस्य कर्तृसाधकत्वं पशुत्वस्य विषाणसाधकत्वेन व्याप्तं येन प्रसङ्गः स्यादित्यर्थः॥ २४॥

 

[1]उभयकारणोपपत्तेरुपपत्तिसमः ।

वादिना प्रमाणेऽभिहिते प्रतिवादी यदा स्वपक्षेऽपि प्रमाणमुपपादयति तदोपपत्तिसम इति । अर्थादुभयकारणोपपत्तिर्नात्र साक्षात् प्रतिपक्षं साधयति, किन्तु प्रतिपक्षकारणमुपपादयति साधयतीति यावदिति प्रकरणसमादितो भेदः । तथा च वार्तिकं "[2]नित्यानित्यकारणं चैकत्रोपपद्यत इत्युपपत्तिसमार्थः[3] । नित्यानित्यपक्षाभ्यां प्रत्यवस्थानात् प्रकरणसम इति भेद" इति । टीकाऽप्येवमेव, यदाह—"स्वपक्षसिद्धेश्च"ति प्रकरणसमे "स्वसाधनेनैवे"त्युपपत्तिसमे पूर्वत्र सिद्धात् स्वसाधनात् स्वपक्षसिद्धेश्चेति तात्पर्यम् । उत्तरत्र तु स्वसाधनेन स्वसाधनसिद्धेश्चेति । किमित्यध्याहार इति चेत्, अन्यथाऽसम्भवात् । न हि प्रतिसाधनेन बाधप्रतिरोधाभ्यां प्रकारान्तरमस्ति । बाध एवैकत्र प्रतिसाधने-

उपपत्त्याभासगर्भत्वादविशेषसमायास्तदनन्तरं तादृशोपपत्तिसमलक्षणम् । ननु सूत्रोभयपदस्य पक्षप्रतिपक्षवाचित्वेनोभयप्रमाणोपपत्त्या प्रत्यवस्थानमसदुक्तिकमित्यत आह—वादिनेति । तेन वादिपक्षोपादानं प्रत्यवस्थानविषयोपदर्शकमिति नोक्तदोष इत्यर्थः । ननु स्वपक्षे प्रमाणं साधयन् कथमुभयकारणोपपत्तिमाहेत्यत आह—अर्थादिति । तेनोभयत्र प्रमाणमङ्गीकृत्य बाधाभिधानमुपपत्तिसमः । त्रयोविंशतिजात्यन्यजातित्वं तल्लक्षणमतः पूर्वजातिलक्षणासंगृहीतजात्युपसंग्रहः । तेन सर्वथानुपलभ्यमानोपाधिशङ्काऽत्रैवान्तर्भवति । एतच्च प्रत्युत्तरसूत्रे युक्ताङ्गहीनत्वेन स्फोरयेदितीति साम्प्रदायिकाः । नन्वनधिकबलेन साधनेन बाधाभिधाने प्रकरणसमत्वं प्रतिधर्ममात्रेण प्रतिरोधाभिधाने प्रतिधर्मसमत्वं सत्प्रतिपक्षाभिधानं चेत्तदा हेत्वाभासः सदुत्तरमेवेति नोपपत्तिसमा जात्युत्तरमित्यत आह—नात्रेति । अत्र बाध उपसर्जनीभूतः प्रतिपक्षसाधनसिद्धिरुद्देश्यत्वेन प्रधानं प्रकरणसमादौ च प्रतिपक्षसाध्यसिद्धिराकाङ्क्षा उद्देश्येत्यर्थः । ननु यथाश्रुतेनैवोपपत्तेष्टीकायां स्वपक्षसिद्धेश्चेत्यत्र सिद्धात् स्वसाधनादित्यस्य साधनेनेत्यत्र च स्वसाधनसिद्धेश्चेत्यस्य किमर्थमध्याहार इति शङ्कते—किमितीति । समाधत्ते—अन्यथेति । व्याप्त्यपुरस्कारे प्रकरणसमप्रतिधर्मसमान्यतरत्वापत्तिः, तत्पुरस्कारात्तु सत्प्रतिपक्षत्वापत्तिरित्यध्याहारं विना न प्रकृतजात्युपपादनमित्यर्थः । तथापि यथाश्रुतेनैवोपपत्तिः, प्रकरणसमे हि स्वपक्षसिद्ध्या बाधोद्भावनमुपपत्तिसमे तु स्वपक्षसाधनेनेति शङ्कते—बाध एवेति । स्वपक्षसिद्धिसाध्ये नान्यो बाधः, किन्तु प्रतिपक्षसिद्धिरेव हेतुफलभावस्य तदनियतत्वादिति प्रतिसाधनेन बाधसम्भवेऽपि न

1. NS. 5. 1. 25. 2. The printed editions read 'नित्यकारणं चानित्यकारणं'. 3. The printed editions read '०समः'.

नान्यत्र प्रतिपक्षसिद्धेयति चेत्, न, विपरीतसाधनं बाधनमिति पर्यायत्वात्। प्रतिपक्षसिद्धेश्च साध्यान्तराभावात्। तदीयमेवं प्रवर्तते—अनित्यः शब्दः कार्यत्वादित्युक्ते यद्यनित्यपक्षे प्रमाणं कार्यत्वमस्तीत्यनित्यः, ननु नित्यपक्षेऽपि किञ्चित् प्रमाणं भविष्यति, मदुक्तत्वात्, त्वत्पक्षवत्; त्वत्पक्षमत्पक्षयोरन्यतरत्वात्, प्रकृतसन्देहविषयत्वात्, विप्रतिपत्तिविषयत्वात्, मद्बुद्धिविषयत्वादित्येवमादिबृहस्पतिमतानुशिष्टमन्यदपि हेतुजातं प्रतिसन्धेयम्। तथा च त्वत्पक्षस्य बाधः प्रतिरोधो वा प्रसक्तः। तदस्याः सामान्यतः प्रमाणसम्भावना द्वारं, हेतुर्दूष्यः, बाधप्रतिरोधावारोप्यौ, तदाभासा चेयमिति ॥ २५ ॥

दोषचिन्तासूत्रम्—

### [1]उपपत्तिकारणा[2]नुज्ञानादप्रतिषेधः।

वादिसाध्योपपत्तिकारणाभ्यनुज्ञानादयमप्रतिषेधो विरोधात्। न ह्यनुज्ञानप्रतिषेधावेकस्य सम्भवत इत्यर्थः। सोऽयं व्याघातः अननुज्ञाने वा स्वीयमपि नानुजानीयादविशेषात्। प्रातिस्विकदुष्टत्वं तु युक्ताङ्गहीनत्वम्, अनधिकबलस्याबाधकत्वात्। अस्याधिकबलाभ्युपगमे वा स्थापनाहेतोर्दोषान्तरवचनमनुपजीवकत्वात्। प्रतिरोधस्तु न हीनाधिकाभ्यां कस्यचित्, न च तुल्यत्वं वास्तवं मिथोविरुद्धयोः। ततो विशेषजिज्ञासायां प्रतिपक्षोपपत्तेर्विशेषतः प्रतिपत्तेः स्थापनाहेतोरेव विशेषो जिज्ञास्यो

---

स्वपक्षसिद्ध्या बाध इति यथाश्रुतेनोपपत्तिसमा। विपरीतेति। सामान्यतः प्रमाणमनुमीयमानं प्रमाणत्वाविशेषेण तावद् दुर्बलमतः समानबलत्वेन प्रकृतानुमानस्य प्रतिरोधोऽधिकबलत्वेन बाध इति भावः। प्रमाणसम्भावनेति। समीचीना भावना सम्भावना निश्चय इत्यर्थः ॥ २५ ॥

वादिसाध्येति। वाद्यभिमतसाध्यस्योपपत्तौ यत् कारणं तस्यानुज्ञानात् जातिवाद्युक्तहेतूनां वादिसाध्यविषयप्रमाणोपजीवकत्वादित्यर्थः। ननु मा भूद्बाधः प्रतिरोधोऽस्त्वित्यत आह—प्रतिरोधस्त्विति। हीनाधिकयोर्बाध्यबाधकत्वनियमादित्यर्थः। तर्हि तुल्यबलयोरेव प्रतिरोधोऽस्त्वित्यत आह—न चेति। नन्वेवं सत्प्रतिपक्षमात्रोच्छेद इत्यत आह—तत इति। अयमर्थः—वास्तवत्वं तुल्यबलत्वं विवक्षितमाभिमानिकं वा? आद्ये वस्तुनो विवक्षितत्वाद्वस्तुद्वैरूप्यापत्त्याऽन्यतरमनयोः सदोष-

---

1. NS. 5. 1. 26. 2. The printed editions of the Sūtra read '०कारणाभ्यनु०'.

न चास्याङ्गान्तरवैकल्यमिति । तेनैव विकलेन भवितव्यम् उपपादय वास्य वैकल्यम् । स्यादेतत्, उपाधिरेवात्र कश्चिददृश्यो भवेत् । तद्व्यावृत्तिश्च त्वत्साध्यव्यावृत्तिलक्षणे मत्पक्षे प्रमाणं स्यादिति उपाधिरूपं विशेषमदृष्ट्वा च प्रतिरोधदेशनाप्युपपद्येतेति चेत् न, उपाध्यसिद्धौ तद्व्यावृत्तेरप्यसिद्धेः मदुक्तत्वादीनामपि तथैवोपाध्याक्रान्तिप्रसङ्गेन व्याघाताच्च । उपाधिसन्देहोऽस्त्विति चेत्, न; सन्दिग्धासिद्धेन सिद्धस्य प्रतिरोधानुपपत्तेः । उपाधिसन्देह एव दूषणमस्तु तद्द्वारेण प्रतिरोधसन्देहो वेति चेत्, न; एवं तर्हि नेदं साधनं सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वात् प्रतिपक्षशङ्काग्रस्तत्वादिति वा वाक्यार्थः । तदिदमनुत्तरं स्वात्मप्रतिक्षेपकत्वात् । अथैवं स्यात् नेदं साधनमसिद्धव्याप्तिकत्वात् । असिद्धव्याप्तिकं चेदं सन्दिग्धोपाधित्वात् । एवं हि स्वात्मप्रतिक्षेपोऽपि निवर्तते । विपक्षे बाधके न विशेषात् । तथा हि असिद्धव्याप्तिकस्य साधनत्वे सर्वं सर्वस्माद् गम्येतेति सन्दिग्धोपाधिकस्यापि व्याप्तिसिद्धो विरोधः । उपाधिविरहनिश्चयो हि व्याप्तिसिद्धिरनिश्चयश्च सन्देह इति । न प्रकृतेऽपि तर्कसहायस्वीकारे विपक्षबाधकस्य विद्यमानत्वात् । तथा च युक्ताङ्गहीनत्वम् । शङ्कां प्रति बाधकाभावस्य युक्तस्यैवाङ्गस्यानपेक्षणात् ।

---

मिति निश्चिते किं तदिति जिज्ञासायां जातिवादिना सम्बन्धाकारमासञ्जितहेतौ विशिष्यापरिचिता पक्षादिस्वरूपेऽनुमानाङ्गरूपवैकल्यावैकल्यविचारस्यानवस्थापराहतत्वात् तत्र दोषशङ्का जागरूका । वादिप्रयुक्ते च कृतकत्वादिहेतौ विशिष्यानिश्चिते तदभावो योग्यानुपलब्धेर्निर्णीत इति तस्याधिकबलस्य हीनबलेन प्रतिरोध इति । द्वितीयस्तु प्रत्युत्तरसूत्रार्थपर्यालोचनया निरस्त इति । ननु योग्यानुपलब्ध्या योग्याङ्गवैकल्याभावनिर्णयेऽप्ययोग्योपाधिदूषित एव स्थापनाहेतुर्भविष्यतीत्याशङ्कते—तस्मादेतदिति(?) । ननु साध्याव्यापकोपाधिव्यावृत्त्या वादिसाध्यनिवृत्तावपि प्रतिवादिसाध्यसिद्धिः, यद्यपि भावाभावविषयविवादे तावतैव कृतार्थता, तथापि साध्यान्तरविचारेण तथात्वमित्यत आह—त्वत्साध्येति । तथाप्युपाधितदभाववतोरतुल्यबलत्वे क्व प्रतिरोध्यप्रतिरोधकत्वे इत्यत आह—उपाधिरूपमिति । तत्त्वाप्रतिसन्धानदशायां प्रतिरोधः, तत्प्रतिसन्धाने तु बाध एवेत्यर्थः । अदृश्योपाध्यभावस्तद्धेतावपि योग्यानुपलब्ध्या शक्यग्रह इति तत्रापि व्याप्यत्वासिद्धिरित्याह—उपाध्यसिद्धाविति । सर्वथानुपलभ्यमानोपाधिशङ्का मदुक्तत्वादिहेतोरपि त्वद्दर्शितेऽस्तीति व्याघात इत्याह—मदुक्तत्वादीनामिति । तदेवं वास्तवं वैकल्यं निरस्य प्रकारान्तरेण वैकल्यमाशङ्कते—उपाधिसन्देह इति । अदृश्यसाधकत्वं बाधकमानाप्रसरेण सन्देहस्य

बाधकेऽपि शङ्केति चेत्, न, पुनरपि स्वात्मप्रतिक्षेपो दुर्वारः स इति। तदिदमुक्तम् 'उपपत्तिकारणानुज्ञानादप्रतिषेध' इति ॥ २६ ॥

## [1]निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः।

वादिना निर्दिष्टस्य प्रमित्यङ्गस्य व्यापारवतोऽभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इति सूत्रार्थः। तदेतत् प्रत्यवस्थानरूपमुक्तम्। बीजन्त्वस्यावधारणविकल्पः, स चायमर्थलभ्यः, एवकारार्थमनुक्रम्याप्यर्थेन प्रत्यवस्थानायोगात्। अत एव प्रत्युत्तरसूत्रे *भाष्यं "न तु नियम उच्यत" इति। वार्त्तिकमपि "न कारणान्तरं प्रतिषिध्यत" इति। एतत् सर्वमभिसन्धाय टीकाकारो-

---

सुलभत्वादिति भावः। पुनरपीति। तर्कमूलव्याप्तौ स्वक्रियाव्याघातेन शङ्कानुदय इति [2]'व्याघातावधिराशङ्के'त्याद्यन्यत्र विस्तर इत्यर्थः ॥ २६ ॥

कारणोपपत्तिनिरूप्योपपत्तिसमानन्तरं कारणाभावनिरूप्योपलब्धिसमलक्षणम्, अभावस्य प्रतियोगिनिरूप्यत्वात्। ननु कारणपदस्य हेतुहेतुवाचिना तदन्यानुमित्यङ्गवैकल्येन प्रत्यवस्थाने लक्षणमिदमव्यापकमित्युपलक्षणतया व्याचष्टे—[3]वादिनेति। ननु समव्याप्तिकहेतौ हेतुं विना साध्यस्योपलम्भादित्यसम्भवीत्यत आह—व्यापारवत इति। नात्र स्वरूपाभावो विवक्षितः, किन्तु व्याप्रियमाणाभाव इत्यर्थः। ननु ज्ञापकमनेकमपि भवतीति न्यायेन प्रत्यवस्थानमेवासदुक्तिकमित्यत आह—तदेतदिति। ननु नावधारणं सूत्रे श्रूयते इत्यत आह—स चेति। अस्याभावेऽप्येतदुपलभ्यत इति दूषणमेतत्सद्भाव एवैतदुपलब्धिरिति पराभिमतमवधारणमनादाय न युज्यत इत्यर्थादवधारणलाभ इत्यर्थः। यद्यप्यत्र भवत्येवोपलम्भ इति तदभाव इत्युपलम्भादित्यन्ययोगव्यवच्छेदमालम्ब्य प्रत्यवस्थाने जात्यवच्छेदसामान्यानुपपत्तिमात्रमत्र बीजमित्यत्र सूत्रकृत्तात्पर्यं सामान्यस्य शीघ्रोपस्थितत्वाद्विशेषस्यानाकाङ्क्षितत्वाच्चेति नायोगव्यवच्छेदमालम्ब्य प्रत्यवस्थाने [4]जात्यन्तरम्। तथा च वक्ष्यति—अत्र यद्यप्यवधारणविकल्पानुपपत्त्या प्रत्यवस्थानमुपलब्धिसम इति लक्षणं सदुत्तरेऽपि गतमवधारणविकल्पमात्रानुपपत्त्या प्रत्यवस्थानमित्यपि मात्रपदस्य व्याप्त्यपुरस्कारान्न त्वमुत्र व्याप्तिपुरस्कृत्यैवेति। तथा प्रत्यवतिष्ठते तदव्यापकं तथापि प्रयोजकार्थावधारणदूषणेन स्वव्याघातकमुत्तरमुपलब्धिसम

---

1. NS. 5. 1. 27. 2. Vide, *Kusumāñjali*, 3. 7. 3. Ms. 'वादिनेति'. 4. MS. 'जात्यनन्तरम्'.

* The printed editions read 'न कार्यस्य कारणनियमः.'

ऽप्येवमाह—"एवञ्च नायोगव्यवच्छेदेने"त्यादि । तदियं पञ्चधा—साध्याभावेऽपि धर्म्युपलभ्यत इति बाधः, साधनाभावेऽप्युपलभ्यत इत्यसिद्धिः, उभयाभावेऽपि धर्म्युपलभ्यत इत्युभयम्, साधनाभावेऽपि साध्यधर्म उपलभ्यत इत्यव्याप्तिः, साध्यधर्माभावेऽपि साधनधर्म उपलभ्यत इत्यतिव्याप्तिः । तत्र प्रथमैवं प्रवर्त्तते पर्वतोऽग्निमानित्युक्ते किं पर्वत एवाग्निमानुत पर्वतोऽग्निमानेवेति । नाद्यो, महानसादीनामग्निमत्त्वोपलब्धेः । न द्वितीयोऽग्निं विनाऽप्यस्य कदाचिदुपलब्धेरिति । द्वितीया तु धूमवत्त्वादित्युक्ते धूमो धर्मिणा किमन्ययोगव्यवच्छेदेन सम्बध्यते किमुतायोगव्यवच्छेदेनेति । न प्रथमः, पर्वते वृषादीनामप्युपलम्भात् । द्वितीयोऽपि न, धूमस्यापि तस्य कदाचिदुपलब्धेरिति । तृतीया तूक्तसमाहारेण द्रष्टव्या । चतुर्थी पुनः पर्वतोऽग्निमान् धूमवत्त्वादित्युक्ते किमत्राव-धार्यते किं पर्वत एव अग्निमानेव ; यद्वा, धूमवत्त्वादेवेति । न प्रथमः, महानसादीनामपि तथाभावोपलम्भात् । न द्वितीयो, वृक्षादीनामपि तत्रोपलम्भात् । न तृतीयः, तत्रालोकादपि तदुपलब्धेरिति । एवमेव समव्याप्तिकेऽपि व्यापार-

---

इति लक्षणम् । तदियमिति । यद्यपि प्रथमद्वितीयसमाहाररूपा तृतीया तयोरेवान्तर्भवति, उक्तिमात्रभेदाद्भेदे प्रथमपञ्चमसमाहारस्यापि प्रकारान्तरत्वापत्त्या न्यूनत्वापत्तिः, तथापि गोबलीवर्दन्यायेनैतदुक्तम् । अत्र तु धर्मिपदेन विशेष्यमात्रस्य सर्वस्य पक्षदृष्टान्तादेः साध्यपदेन साधनान्यसकलविशेषस्याभिधानं तेन विशिष्टहेतुपक्षदृष्टान्तेषु विशेषणविशेष्ययोरप्ययोगान्ययोगाभ्यां पक्षदृष्टान्तेऽपि हेतुसाध्याद्युपादायावधारणविकल्पसम्भवेन नाव्याप्तिः । ननु साध्याभावसाधनोपाधिलब्धिर्व्यभिचाररूपत्वात् सद्दूषणमेव अन्यव्यवच्छेदादिकं पदार्थमारोप्य दूषणं कल्पितदूष्यत्वाच्छलमेव जातिः, इत्थमेव दूषणेऽर्थान्तरत्वमित्यतो विवेचयति—तत्रेति । वचनव्याघातोऽनुकल्पोपपत्त्या च्छलमत्र तु विशेषणविशेष्यस्य व्यवच्छेदफलकत्वादयोगान्ययोगात्यन्तयोगा व्यवच्छिद्यन्ते इति विकल्पेनोत्थानान्न च्छलत्वमिति भावः । ननु समव्याप्तिककृतकत्वादावेतदुक्तमशक्यं यदि हेतुस्तत्र नास्ति तदा साध्यमपि तत्र नास्तीत्यवश्यं तस्यां पक्षस्वीकार्यत्वे तत एवानुमानमित्यत आह—एवमेवेति । सदपि समव्याप्तिकं कृतकत्वमपरामृष्यमाणमनुपयुक्तं परामृष्यमाणलिङ्गकरणपक्षे परामर्शस्यैव लिङ्गव्यापारत्वात्, तथा च साधनान्तरादपि साध्यावगतेरिति तत्रापि वक्तुं शक्यत एव । परामृष्यमाणत्वेन कारणभूते कृतकत्वे वस्तुसत्यसत्कल्पे(?) प्रत्ययभेदभेदित्वादेरपि परामृष्यमाणात्तदवगतिसम्भवात् प्रत्ययः कारणं तद्भेदानुविधायिभेदत्वं कारणतीव्रताद्यनुविधायितीव्रतादित्वमित्यर्थः । यत् प्रागुक्तं साध्याभावसाधनसत्त्वस्य व्यभिचाररूपत्वादिति, तदनु-

मुपादाय । यथोत्पत्तिमत्त्वस्यापरामर्षेऽपि प्रत्ययभेदभेदित्वादेरप्यनित्यत्वोपलब्धेरिति । पञ्चमी तु अन्वयसम्भवे सद्दूषणमेवेति जातिसामान्यलक्षणव्यवच्छिन्नेति नातिप्रसङ्गः । केवलव्यतिरेकिणि तु प्रतिज्ञालक्षणे दिङ्नागचोद्यवदव्याप्त्यतिव्याप्तिप्रसङ्गेन द्रष्टव्या । तदत्रावधारणविकल्पानुपपत्तिर्द्वारं, हेतुर्दूष्यः, बाधोऽसिद्धिरुभयमव्याप्त्यतिव्याप्ती चेति यथायोगमारोप्याणि, तदाभासा चेयमिति ॥ २७ ॥

दुष्टत्वमूलचिन्तासूत्रम्—

**[1]कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ।**

एकस्मिन्नवधारणविकल्पेऽपि नानभ्युपगमं दर्शयन्नुपलक्षणतया विकल्पान्तरे-

---

जानाति—पञ्चमी त्विति । अन्वयिनीति(?)। अन्वयव्यतिरेकिण्यपीत्यर्थः । तथापि सदुत्तरे लक्षणमतिव्याप्तीत्यत आह—जातिसामान्येति । तर्ह्युदाहरणत्वानुपपत्तिः, पञ्चम्या अभाव एवेत्यत आह—केवलेति । ननु केवलव्यतिरेकिणि न साध्याभावसाधनसम्भवो विरुद्धतया सद्दूषणमिति कथं जातिरित्यत आह—जातिसामान्येति(?) । 'प्रतिज्ञालक्षण' 'इति साध्यनिर्देशः प्रतिज्ञे'ति लक्षणे सर्ववाक्यानां सवधारणत्वात् साध्यनिर्देश एव प्रतिज्ञा, प्रतिज्ञैव साध्यनिर्देशः । आद्ये, यत एवकारकरणं ततोऽन्यत्रावधारणमिति प्रतिज्ञाऽवधारिता, न साध्यनिर्देशः, सत्त्वप्रतिज्ञायामतिव्याप्तेः । द्वितीये, साध्यनिर्देशोऽवधारितः प्रतिज्ञा तु तद्विनाऽप्यस्तीत्यतिव्याप्तिरित्येतद् दूषणं विरोधपर्यवसायि सर्वत्र लक्षणे सम्भवतीत्यर्थः । ननु व्यतिरेकिणि साध्याभाववद्वृत्तित्वेन विरुद्धोद्भावनं सदुत्तरम्, उक्तिदोषेण तु जातित्वेऽन्वयिन्यपि सम्भवः । यथाऽयमग्निमानत्र द्रव्यत्वादित्यादौ किं वह्निमानेव द्रव्यत्वादेव वह्निमान् ? नाद्यः, द्रव्यत्वेन संयोगादेरपि सम्भवात्, अन्ये तु द्रव्यत्वमनियतं वह्निं विनाप्यस्तीत्युक्तिदोषाज्जातित्वं, सत्यं केवलव्यतिरेकिणि दिङ्नागदेश्यवदन्वयिन्यप्युक्तिदोषो द्रष्टव्य इति तात्पर्यमित्येके । अन्ये तु अन्वयिन्यप्युक्तिदोषाज्जातिसम्भवे सद्दूषणमेव, तथा च जातिसामान्यलक्षणेन व्यवच्छिन्ना आक्रान्ताः कथं दोषा इति चेत्, केवलेभ्योऽप्यङ्गीकृतयाशयादित्याचक्षते ॥ २७ ॥

प्रत्युत्तरसूत्रार्थस्तु कारणान्तरादपि प्रयोजकान्तरादपि तद्धर्मस्य साध्यादेस्तथादर्शनकालेनोपपत्तेर्न्न प्रतिरोध इति । ननु सूत्रे धूमादित्वादित्येवेत्यस्य एवावधारणस्यानभ्युपगमादिदर्शनादेवावधारणान्तराभ्युपगमदोषस्तदवस्थ इत्याह—एकस्मिन्निति । ननु धूमादग्निमानेवेत्ययोगव्यवच्छेदात्मकावधारणार्थोऽभ्युपगम्यत

---

1. NS. 5. 1. 28.

ऽप्यनभ्युपगममाह । तेनानुमानानङ्गानामवधारणानामनभ्युपगमादित्यर्थः । तदिदमयुक्ताङ्गाधिकत्वम् । मया तावदेवमेवाभ्युपगम्यत इति चेत्, न; अभ्युपगमविषयाभावात्, व्याघाताच्च । अवधारणविकल्पानुपपत्त्या स्वात्मनोऽपि व्याप्तेरिति ॥ २८ ॥

**[1]तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ।**

अस्योपलक्षणमर्थः । अनुपलब्ध्या हि विषयी धर्म उपलक्ष्यते, तेन उपलब्ध्यनुपलब्धी इच्छानिच्छे द्वेषाद्वेषौ कृत्यकृती शक्त्यशक्ती उत्पत्त्यनुत्पत्ती व्यवहृत्यव्यवहृती इत्यादयः संगृहीता भवन्ति । यद्यपि च विषयिधर्माणां

---

एवेत्यत आह—अनुमानानङ्गानामिति । अयन्तु व्याप्यत्वरूपत्वेनानुमानाङ्गमेवेति भावः । ननु सर्वपदानां व्यवच्छेदार्थं इत्युपगन्तुर्मम प्रसाध्याङ्गकमेवासङ्गनमिति शङ्कते—मयेति । इत्थमनुमानापह्नवे प्रत्यक्षादेरनुमानेनैकमेवेत्यप्रमात्वस्यानभ्युपगमे सर्व एव पक्षाः प्रमाणाभावेन सिध्येयुरिति निराकरोति—अभ्युपगमेति । 'अभ्युपगमविषयाभावादि'ति विवृणोति—अवधारणमानाभावेनेति शेषः । व्याघातं विवृणोति—[2]स्वात्मनोऽपीति ॥ २८ ॥

अनुपलब्धेः प्रतियोग्युपलब्धिनिरूप्यत्वात् सङ्गतिः । नन्वनुपलब्धिसमतुल्ययोगक्षेमत्वेनानिष्टिसमादीनामपि सम्भवादत्र च तदन्तर्भावादव्यापकं सूत्रमित्यत आह—अस्येति । ननूपलब्धिसमस्य पदस्य लाक्षणिकत्वे मुख्यार्थालाभप्रसङ्गेनाजहत्स्वार्था लक्षणा वाच्या, तत्र शक्योपलक्ष्यसाधारणरूपाभावेनानुपपत्तिरित्यत आह—विषयीति । तेन विषयित्वमुभयसाधारणमित्यर्थः । यद्यप्युपलब्धिर्विषयित्वं न त्वभावरूपा अनुपलब्धिरपि, तथापि विषयित्वेनेतरज्ञानाधीनविज्ञानत्वं विवक्षितम्, तच्चानुपलब्धेरपि तेन सावधित्वकाः पृथक्त्वादयः आदिपदग्राह्या द्रष्टव्या इति । न जात्यन्तरत्वापत्तिः, अत्र पटो घटस्वात्मनि तद्रूपो न वेत्यादिविकल्पोपक्रमदूषणस्य जात्यन्तरत्वापत्त्यविषयित्वेन सम्बन्धमात्रविवक्षा । तेन स्वात्मनि तदतद्रूपताविशेषणभागीत्यप्याहुः । यद्यपीति । अनुपलब्धपक्षयोपलब्धेराद्यधीवेद्यत्वं सकलमविषयकव्यापकत्वं वा मूर्द्धाभिषिक्तत्वं वा नाम सङ्कर इति । ननु सा सङ्करनिवृत्त्यर्थकर्त्तव्याप्यादिपदमस्तु न वायं लक्षणकोट्यपरीहारः । लक्ष्यनिर्देशस्यैव समानत्वेन तत्रैव परीहारात् । नैवम्, उपलब्धिपदोपादाने साक्षाद्विषयत्वस्यैव उपलक्षणमिति भ्रमेण परम्परासम्बन्धमादाय प्रवृत्तजातीनां

---

1. NS. 5. 1. 29. 2. MS. 'आत्मनो०'.

मध्ये मूर्द्धाभिषिक्तत्वादुपलब्धिरेवोपलक्षणं वक्तुमुचिता, तथाप्युपलब्धिसमानामसङ्करो मा भूदित्यनुपलब्धिरुक्ता। तेन यद्विषयिधर्मेष्वेव भावभागमाकृष्योपलब्धिसमलक्षणं व्याख्यातम्, अभावभागे चानुपलब्धिसमा व्यवस्थापिता, तदशिष्यमनादेशिकत्वात्, भाष्यकाराद्युदाहरणासंग्रहाच्च। न च तत् सदुत्तरमेव, अयुक्ताङ्गाधिकत्वात्। न चासम्भवदुक्तिकम्, व्यवच्छेदवाक्यार्थरुचीनां तथा प्रत्यवस्थानस्य सुलभत्वात्। न चान्यत्रान्तर्भूतं लक्षणसङ्करादिति। तस्माद्भावाभावाभ्यामियमेव द्विमुखी। उपलक्षणार्थानुगमाभ्यामियमेव द्विनाम्नी अनुपलब्धिसमा विषयिधर्मसमा चेति। कथं पुनरुपलक्षणे सूत्रकारस्याभ्युपगम उन्नेयः? अनिष्टिसमादीनामप्युदाहरणदर्शनात्। तल्लक्षणान्तराप्रणयनात्। "[1]विप्रतिपत्तौ च संप्रतिपत्ते""व्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया" इत्यादिसूत्रदर्शनाच्च। एतद् वाक्छलेनैव गतार्थम्। तथा [2]"चान्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः",

नामशक्तीनां व्यावृत्तिरसंग्रहः स्यादिति उपलक्षणमव्यापकं स्यादनुपलब्धिपदोपादाने तु परंपरयापि विषयित्वं लक्ष्यत इत्यर्थात्। इह लक्षणेऽप्युपलब्धिपदप्रयोगे लक्ष्यपदोपस्थापितेऽनुपलब्ध्या स्वव्याघातकत्वे लक्ष्यलक्षणपदयोर्विरोधाभासेनान्वयधीविषयत्वप्रसङ्गाच्च। विषयिधर्मे स्वविषयत्वतदभावानुपपत्त्या प्रत्यवस्थानमुपलब्धिसम इति लक्षणम्।

नमो जलदनीलाय शेषपर्यङ्कशायिने।
लक्ष्मीकण्ठग्रहानन्दनिस्पन्दाय मुरद्विषे॥

अत्र स्वविषयित्वं लिङ्गज्ञानस्यैकस्यैव क्रियाकर्मविरोधप्रसङ्गः, स्वाविषयत्वे स्वानवस्थायाः ज्ञानान्तरावेद्यतया न व्यवहारः स्यादिति अस्य स्वव्याघातकत्वेन जात्युत्तरस्य संग्रहार्थं स्ववृत्तित्वखण्डनेन स्वव्याघातमुपलब्धिसमलक्षणमित्याहुः। अनादेशिकत्वादिति। व्याख्यानोपदेशपरम्पराविरहादित्यर्थः। भाष्यकारादीति। पूर्वसूत्रदर्शितोदाहरणाव्याप्तेरित्यर्थः। अयुक्तेति। अवधारणविकल्पस्यायुक्तस्यैवाङ्गत्वाङ्गीकारेण स्वव्याघातकत्वादित्यर्थः। अनिष्टिसमादीनामिति। यद्यपि जातित्वलक्षणासंग्रहीतशङ्कापिशाम(च्य ?)ादिसंग्रहाय चतुर्विंशतेरन्यतमा जातिरङ्गीकर्तव्याकृतिगणत्वेनेति तत्रैवानिष्टिसमादीनामन्तर्भावसम्भवे न लक्षणान्तराप्रणयनोपपत्तिस्तथाप्युपलब्धिसमायामेवानिष्टिसमादीनामन्तर्भाव इत्युपदेशपारम्पर्यादत्रैवोपलक्षणपरत्वमवसीयते। यथा व्याकरणादिसूत्रे क(य?)त आरोप्यमतदर्थपरत्वमेतस्येत्युपदेशपरम्परा तत एवावसीयत इति साम्प्रदायिकाः।

1. NS. 2. 1. 3-4. 2. NS. 2. 2. 31.

"[1]अनियमे नियमान्नानियम" इति सूत्रे वाक्छलतयैव व्याख्याते इति चेत्, नन्वेवं विवक्षिताऽप्यनुपलब्धिसमा वाक्छलमेव तुल्ययोगक्षेमत्वादिति न जातिः स्यात्। अथ कल्पितदूष्यं दूषणं छलमुक्तं न चात्रानुपलब्धिपदार्थः कल्पितोऽपि त्वनुपलब्धिः स्वात्मन्यनुपलब्धिर्न वेत्युपक्रम्य दूषणमतो न च्छलं तल्लक्षणायोगात्। न च विशेषलक्षणात्तथा अभिधोपचारतात्पर्यवृत्तिव्यत्ययाभावात्। तदेतत्तुल्यमन्यत्रापि। कथं तर्हि टीकाकारोऽन्यानियमयोरनन्यत्वनियमाभ्यां प्रत्यवस्थानं वाक्छलमित्याह ? शब्दान्तरनिमित्तकल्पनाद्वारेणार्थान्तरकल्पनमाश्रित्य। तथा हि कञ्चिद्विषयं सम्बन्धिनमवधिं चापेक्ष्य केचिद्विषयिणः सम्बन्धिनो व्यावृत्ताश्चेति तच्छब्दा अपि तन्निमित्ता

---

नन्वेवमिति। उपलब्धिपदस्य विषयिधर्ममात्रोपलक्षणत्वे मात्रं प्रतिपत्तेरनुपलब्धिमात्रप्रवृत्तायां तत्राप्यविप्रतिपत्तेः। तन्मुख्योदाहरणेऽपि च्छलमेव स्यादित्यर्थः। तल्लक्षणेति। 'अर्थविकल्पोपपत्त्या हि वचनविघातश्छलं' तत्तदा स्याद् यदि वादिविवक्षितमर्थं तिरस्कृत्य विवक्षितमारोप्य दूषणं स्यादत एवादिविवक्षितमपि विकल्प्यानुद्गतमिति न च्छलमित्यर्थः। तदेवं सामान्यलक्षणाभावादच्छलत्वं व्युत्पाद्येदानीं विशेषलक्षणायोगाद्विशेषेष्वनन्तर्भावेन निर्विशेषस्य सामान्यस्याभावादपि न च्छलत्वमिति दर्शयति—न चेति। नेपालादागतोऽयं नवकम्बलत्वादित्युक्ते कुतोऽस्य नव कम्बला एक एवास्य कम्बलो यत इतिवदभिधावृत्तिव्यत्ययाभावेन वा कम्बलत्वाद् घटज्ञानवानयं घटोच्चारयितृत्वादित्युक्ते सिद्धोऽयमशब्दस्यानुच्चार्यमाणत्वादितिवदुपचारवृत्तिव्यत्ययाभावेनोपचारच्छलत्वाभावात्। शब्दोऽनित्यः कृतकत्वादित्युक्ते साध्याविशिष्टोऽयमिति स्वतात्पर्यव्यत्ययाभावेन सामान्यच्छलत्वाभावान्न चास्य च्छलत्वप्रकारोऽस्तीत्यर्थः। 'अन्यानियमयो'रित्यत्रानन्यत्वनियमाभ्यां यथासंख्यमन्वयः। शब्दान्तरेति। अनुपलब्धिपदस्योपलब्ध्यभाववाचिन उपलब्धितिरश्चीनवृत्तिरभाव एव वाच्य इति न स्वानुपलब्धिपदवाच्य इति तस्यानुपलब्धिपदवाच्यभावमध्यारोप्य दूषयतश्छलम्। अनुपलब्धिपदेन तूपलब्ध्यभावस्वरूपेऽभिहिते तस्य घटमिव स्वमपि प्रतिविषयं न वेति विकल्प्य दूषयतो जातिरित्यर्थः। तदेव विशदयति—तथा हीति। घटानुपलब्धिर्घट एव विषयो न स्वात्मा प्रकृतिविकारभाव एव सम्बन्धी न स्वात्मा नृत्यव्यक्तिभेदस्य नृत्यव्यक्त्यन्तरमेवावधिर्न स्वात्मेति। व्यवस्थितौ यन्नियततया यावद्रूपाया अर्थान्तरनियतभावे रूपतदर्थवाचिन एव तच्छब्दा इत्यस्याप्यर्थस्य व्यवस्थायां तेषां शब्दानां तन्नियतरूपोल्लङ्घनेन स्वपरसाधारणानुकल्पायां वाक्छलमित्यर्थः। अत्र विप्रति-

---

1. NS. 2. 2. 54.

एवेति व्यवस्थिते विषयान्तरसम्बन्ध्यन्तरावध्यन्तरनिमित्ततां कल्पयित्वा वचनं विहन्ति चेच्छलमेव, यदा तु नैवं तदा जातिरिति संक्षेपः। तदयं सूत्रार्थः—यथानुपलब्धे-र्विषयिणो धर्मस्यापादितादनुपलम्भाद्विषयतुल्यतया दूषणमनुपलब्धिसमः, तथा-न्यत्रापि विषयिणि धर्मे बोद्धव्यः। एवञ्च प्रवर्तते। उपलब्धं लिङ्गादिसिद्ध्यङ्ग-मिति। तदर्थमयं प्रयोगः। उपलब्धिश्चोपलब्धिरूपेण यत्र प्रवर्तते तदुपलब्ध-मित्यविवादम्। तदियमात्मन्यपि ताद्रूप्येण वर्तते न वा? वर्तते चेत्, इयमप्युपलब्धा स्यात्, विषयवत्, तथा च नोपलब्धिरुपलब्धत्वाद्विषयवदेव। नेति पक्षे, स्वात्मनि स्वरूपेणावृत्तेर्नासावुपलब्धिरिति कथं तद्वृत्तेर्हेत्वादिरुपलब्धः स्यादिति व्यर्थः प्रयासः। एवमनुपलब्धावप्यनुपलब्धिः स्वात्मनि स्वरूपेण वर्तते न वा? वर्तते चेद्विषयवदनुपलब्धा स्यात्। तथा च तद्वदेव तदभावः स्यात्, स चोपलब्धिरूप इति विपरीतापत्तिः। न वेति पक्षे,स्वात्मनि स्वरूपेणावृत्तेर्न स्यादेवेति विपरीतापत्तिः। उभयथापि हेत्वंशोऽसिद्धः, ताद्रूप्येण वृत्तावप्यनुपलब्धिर्नानुपलब्धा न वा नास्ति। तद्वृत्तं हि विषयोऽपि नानुपलब्धो न वा न स्यादित्यनैकान्तिको हेतुरिति। एवमिच्छानिच्छादिष्वपि नामपरिवर्त्तनेन प्रयोगा द्रष्टव्याः। तद्-विशेषे खल्वपि। सन्दिग्धे न्यायः प्रवर्त्तते, सन्देहविषयश्च सन्दिग्धः। अथ सन्देहः

---

पत्त्यादिषु विषयिधर्मिष्वेवान्यादिष्वनित्यसमान्तर्भाव इत्याशयेन सामान्येनोपसंहरति—जातिरिति। तदेवं सूत्रस्य उपलक्षणपरत्वमुपपाद्य तदनुरूपं व्याचष्टे—तदयमिति। वर्त्तते न वेति। अत्र विकल्पोपक्रमस्य सूत्राश्रवणादेकतरपक्षावलम्बनेन यत् प्रत्यवस्थानं यच्च विकल्पोपक्रमेण प्रत्यवस्थानं तदुभयमपीयं जातिः। उदाहरणैकदेशस्य च दर्शनमिति न जात्यन्तरापत्तिरिति भावः। असिद्ध इति ताद्रूप्येण स्ववृत्तित्वाभ्यामनुपलब्धेरुप-लब्धस्यावश्यकत्वाद्विरुद्ध इत्यर्थः। अनैकान्तिक इति। नात्र घटोऽनुपलब्धत्वादित्याकारो हेतुरित्यर्थः। नामपरिवर्त्तनेनेति। इच्छादिषु भावरूपेषु विषयिधर्मेषूपलब्धिवदभावरूपे (?)ननूपलब्धिरत्र प्रत्यवस्थेयमित्यर्थः। यद्वा, नामविपरिवर्त्तनप्रसञ्जनेन इत्यर्थः। तथा हीच्छा स्वात्मनि ताद्रूप्येण वर्त्तते वा न वा? आदौ तद्विषयवदिष्टत्वान्नेच्छा, अन्त्ये स्वात्मनि स्वरूपेणावृत्तेर्न स्यादेवेत्युभयथाप्युपलब्ध्यादिवदिच्छायामपीच्छापदं व्युदस्या-निच्छापदप्रसञ्जने नामपरिवर्त्तनात्। तद्विशेष इति। तेषां विषयिधर्माणामनुप-लब्धीच्छादीनां विशेषे संशयभ्रमादौ कामादौ च यथा विषयिधर्मसमा प्रवर्त्तते तथोदाह्रियत इत्यर्थः। 'खल्वपी'ति निपातसमुदाय उदाह्रियत इत्यर्थे वर्त्तते।

स्वात्मनि ताद्रूप्येण वर्त्तते न वा ? प्रथमे, सन्दिग्धः सन्देहः कथमन्यव्यवच्छेदं कुर्यात्, नेति पक्षे तु सन्देहो न स्यादेव स्वात्मनि ताद्रूप्येणावृत्तेरिति न्यायविषयाभावः। एवं भ्रमकामादिष्वपि बोद्धव्यम्। तदस्य विषयी धर्मो द्वारम्, प्रयोगो दूष्यः, प्रतिकूलतर्कत्वमारोप्यम्, अतिपीडयाऽसिद्धिरनैकान्तिकत्वं वा, तदाभासा चेयमिति ॥ २९ ॥

दुष्टत्वमूलन्तु—

**[1]अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः।**

अस्याप्युपलक्षणे तात्पर्यम्। 'उपलम्भात्मकत्वादुपलब्धेरहेतु'रित्यादिसूत्रविपरिणामेन सर्वत्र समाधानप्रवृत्तेरिति। अक्षरार्थस्तु—अनुपलब्धिः स्वात्मनि ताद्रूप्येण वर्त्तत इत्यद्धा न त्वस्यायमर्थः स्वविषयेति ; अपि तु, तदात्मिकेति। तथा चासावनुपलब्धिरुपलभ्यवन्न स्यादित्यहेतुः। उपलभ्यं नास्तीत्यवधार्यते तन्निषेधकात् प्रमाणादनुपलब्धेरुपलम्भात् ; न चासौ स्वात्मनोऽपि प्रतिषेधकं प्रमाणं निषेधो वा न ह्युपलम्भाभावः स्वप्रतियोगिनं विधत्ते स्वप्रतियोगिरूपो वा। तथात्वे वा स एव न स्यात्। को विदधीत को वा तद्रूपः स्यादित्यहेतुः। तदिदं युक्ताङ्गहीनत्वं निषेधकप्रमाणमनपेक्ष्य निषेधसाधनात्। अयुक्ताङ्गाधिकत्वं वा। अयुक्तस्यैव स्वात्मनि निषेधकत्वस्य निषेधरूपत्वस्य वा स्वीकारादित्यनेकान्तोऽनुपलम्भः सत्यपि गतत्वादित्यप्यहेतुः। अनुपलम्भात्मकत्वादनुपलब्धेर्विशेषणान्तररहितत्वादिति यावत्। तदिदमविषयवृत्तित्वम्। यदि हि निर्विशेषणा व्यभिचरेत् किमायातं विशिष्टायाः एकदेशगुणदोषयोः समुदायाविषयत्वात्। अन्यथा विशेषणोपादानवैयर्थ्यात्। योग्यानुपलब्धिस्तु भावाभावयोरप्यभावं नातिवर्त्तत इति। एवं

व्यवच्छिन्द्यादिति पक्षाभिमतधर्मेण। तव धर्मापेक्षयेति शेषः। असिद्धिरिति भाष्यकारोदाहरणाभिप्रायम्। तथा ह्यावरणाद्यभाव अनुपलभ्यमानत्वादित्यत्र स्थापनाहेतोरावरणस्यानुपलब्धिवेद्यत्वे आवरणाद्यभावस्य विशेषणस्यासिद्धिरित्यर्थः ॥ २९ ॥

अव्यापकत्वमाशङ्क्याह—अस्यापीति। विधत्त इति। आक्षिपतीत्यर्थः। सूत्रार्थवैभवाद् यत्र पूर्वपक्षदशानुद्भावितमप्युद्भाव्य परिहरति—अनेकान्त इति। सत्यपीति। अयोग्या इति शेषः। निषेध्येऽनैकान्तिकत्वे हेतुमाह—अनुपलम्भात्मकत्वादिति। एवं

1. NS. 5. 1. 30.

तर्हि विशिष्टानुपलब्धिरनुपलब्धेरप्यभावमुपलब्धिं गमयेत्। न चेदेवं विवक्षितमप्यभावं न गमयेदविशेषात्, तत्र गतावितरेतराश्रयदोषोऽगतावप्यनुपलब्धिरसमर्थेत्येतदप्यहेतुः। अनुपलम्भात्मकत्वादनुपलब्धेर्निषेधकप्रमाणात्मकत्वात्। तथा च स्वविषये समर्थत्वे अन्यत्रासामर्थ्यं न क्षतिमावहतीत्यर्थः। अथोभयोरपि विधायकप्रमाणगोचरत्वं किं न स्यात्? अभावोच्छेदप्रसङ्गात्। अथ विपर्ययः कस्मान्न भवति? स्वभावविपर्ययप्रसङ्गात्। तदिदमविषयवृत्तित्वम् अन्यत्रासामर्थ्येनान्यत्र शक्तेरदूष्यत्वात्। भावे तूपलभ्यमाने अभावानुपलब्धिः पृष्ठलग्नेति ॥ ३० ॥

---

तर्हीति। यदि योग्यानुपलब्धिरभावं गमयति तदोपलब्धिमपि गमयेत्, उपलब्धेरनुपलब्ध्यभावात्मकत्वात्, यदि चाभावरूपामप्युपलब्धिन्न गमयेत् तदाभावबोधनासमर्थैव स्यादित्यर्थः। इष्टापत्तिमाशङ्कयाह—तत्रेति। गतौ गमकत्वाङ्गीकारेऽन्योन्याश्रयः, अभावरूपोपलब्धिप्रतिक्षेपार्थकतया गम्येत। तथा च प्रतीतिप्रतियोगिनिरूप्यत्वादभावस्य प्रथममनुपलब्धौ ज्ञातायामनुपलब्धेर्ज्ञानमुपलब्धेनानुपलब्धौ ज्ञातायामित्यर्थः। जातिविद्यापादितान्योन्याश्रयं परिहर्त्तुं सूत्रं व्याचष्टे—निषेधकेति। तथा चोपलब्धेर्भावरूपतया न निषेधकप्रमाणविषयत्वमिति भावः। ननु मा भूदनुपलम्भात्मकत्वं प्रमाणं तद्विधायकत्वं किञ्चिदुपेयमन्यथा तदसिद्धिप्रसङ्गादतस्तदेव प्रमाणत्वाविशेषादभावस्यापि प्रमाणमस्तु, कृतं निषेधकादेवाभावसिद्धिरिति विभागेनेति शङ्कते—अथेति। अभावस्वरूपविधायकेनाभावो गम्यतामितीष्टापादनं प्रत्यक्षाद्यन्यतमेनेत्यपि तथा। अथ विधिमुखप्रत्ययजनकप्रमाणव्यक्त्या निषेधोऽपि विषयीक्रियतामित्यापादनं तदा विधिमुखप्रत्ययविषयत्वमभावेऽपि स्यादित्यभाव एव न स्यात्, दूरे तद्ग्राहकचिन्तेति। निराकरोति—अत एवेति। अभावेति। नियमहेतुं पृच्छति—अथेति। अभावेति। ननु स्वभावविपर्ययप्रसङ्गेन नाभाव-ग्राहक-गम्याभावः, तत् कथं भावोपलब्धेरभावानुपलब्ध्यन्वयव्यतिरेकानुविधायित्वं तथाप्यहेतुत्वे कथमभावोपलब्धेरपि भावान्नानुपलब्धिहेतुकत्वमित्यत आह—भावे त्विति। पृष्ठलग्ना अन्यथासिद्धा, अनन्यथासिद्धान्वयव्यतिरेकयोश्च कारणत्वग्राहकत्वादित्यर्थः। घटोपलम्भे घटाभावानुपलम्भः कारणमन्वयव्यतिरेकाभ्यां वाच्यश्चात्राभावोऽन्यथासिद्धः। घटानुपलम्भस्य च घटोपलम्भप्रागभावरूपस्य लाघवेन कारणत्वेनाभावस्य व्यर्थत्वाद् घटादिभावानुपलम्भे तु नैवमिति वैषम्यमिति भावः। अन्ये तु न काप्यनुपलब्धिः कारणमन्यथासिद्धेर्व्यभिचाराच्च शास्त्रे चानुपलब्धिपदेन पर्युदासवृत्त्या प्रतियोगिसंसृष्टाधिकरणबुद्धेरन्याधिकरणसंसृष्टतया यो न भवत्येवम्भूतः प्रतियोग्युपलम्भो वा हेतुत्वेनाभिमतः, स चाभावोपलब्धावेव कारणं तस्य सप्रतियोगित्वाभावस्य चातथात्वादित्याहुः। अपरे तु उभयानुपलम्भः कारणमविशेषः। पृष्ठलग्नत्वेन नियतान्वय एवोक्तो न त्वन्यथासिद्धिरित्यूचुः ॥ ३० ॥

तथापि भावाभावयोर्विधिनिषेधप्रमाणगोचरता कथमवधार्यत इत्यत आह—

## [1]ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम् ।

अस्ति नास्ति उपलभे नोपलभ इति ज्ञानविकल्पाः, तेषां भावाभावविषयत्वसंवेदनात् अध्यात्मं मनसा नोपपत्तिसाध्यमित्यर्थः। यस्तु स्वात्मनि निषेधकं स्वनिषेधरूपं वा प्रमाणमभ्युपगच्छेत् अन्यदोषेण दुष्टं वा अन्यत्रासामर्थ्ये अन्यत्वासामर्थ्यं वा तस्य स्वोक्तिव्यापनात् सर्वत्र व्याघात इति। एवमुपलब्धावपि उपलब्धिः स्वात्मनि ताद्रूप्येण वर्त्तत इत्यद्धा न त्वस्यायमर्थः स्वविषयेति किन्तु तदात्मिकेति। तथा च तदनुपलब्धेः सैव न स्यात्, तदभावाद्धेत्वादिरपि तद्विषयः कथमुपलब्धः स्यादित्यहेतुः। उपलम्भात्मकत्वादुपलब्धेः। न हि स्वविषयत्वव्यावृत्तेः स्वयमेव व्यावर्त्तते चक्षुरादेरपि तथाभावप्रसङ्गात्। नापि स्वरूपवेदनमस्याः स्वविषयवेदनमपि तु तद्वेदनरूपतैव अन्यथा सर्ववित्तीनां सर्वविषयत्वप्रसङ्गात्। तदवित्तौ तद्विशिष्टार्थव्यवहारविलोपप्रसङ्ग इति चेत्, इष्ट एवायमर्थः। एतावता हि तद्विशिष्टव्यवहारकाले तद्वेदनं सिध्यति। न तु तेनैवेति। सेयं जातिरन्तः कीर्त्तिमपि व्यामोहितवती यदाह—'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यती'ति ॥ ३१ ॥

---

न तूपलब्धेः स्वाविषयत्वेन जडत्वादिप्रसङ्गेन स्वरूपमपि न सिध्येदित्यत आह—न हीति। जलत्वादिप्रसङ्गमूलभूता तु व्याप्तिः विपक्षबाधकाभावेनासिद्धिरिति भावः। ननु विषयविषयिभावस्यान्यथानुपपत्तेर्नीलाकारत्वं ज्ञानस्य नीलविषयत्वं तथा च ज्ञानेन स्वाकारस्यैव ग्रहणे व्याप्त्याकारकादाचित्कत्वाद्बाह्यार्थसिद्धिरस्त्वित्यत आह—आकारस्य ज्ञानबहिर्भावे तथैव विषयविषयिभावानुपपत्तिस्तत्स्वरूपमात्रलग्नत्वे ज्ञानस्वरूपमात्रवेदनमेव नीलवेदनमिति सर्वज्ञानानां सर्वविषयप्रसङ्ग इत्यर्थः। ननूपलब्धेरपरिचये कथमुपलब्ध इति व्यवहार इत्यायातं स्वप्रकाशकत्वमिति शङ्कते—तदविषयमिति। उपलब्धिः स्वात्मनि ताद्रूप्येण वर्त्तते इत्येवंरूपादित्यर्थः ॥ ३१ ॥

---

1. NS. 5. 1. 31. The printed editions of the Sūtra read 'विकल्पानां च'.

[1]साधर्म्यात्तुल्यधर्मोपपत्तेस्सर्वानित्यत्वप्रसङ्गादनित्यसमः ।

अस्याप्युपलक्षणमर्थः । साधर्म्यवद्वैधर्म्येणापि प्रत्यवस्थानसम्भवात्, तथा शब्दानित्यत्ववत् पर्वताग्निमत्त्वादावपि साध्यान्तरे सावकाशत्वात् । तथा हि प्रकृतोदाहरणे तावत् यद्याकाशवैधर्म्यादनित्यः शब्दः त्रैलोक्यमेव तद्वैधर्म्यादनित्यं भवेत् । यदि महानससाधर्म्यात् पर्वतोऽग्निमान् तत्साधर्म्यात्त्रैलोक्यमग्निमद् भवेत् । एवंप्रकाराणामन्यत्रानन्तर्भावात् । प्रकृतेन तुल्ययोगक्षेमत्वाच्च । तस्माद्दिगुपदर्शनमात्रमेतत् । अत एवोपक्रमे साधर्म्यात् 'तुल्यधर्मोपपत्ते'रित्याह । न त्वनित्योपपत्तेरिति । तेनायं सूत्रार्थः—अनित्यत्वप्रयोगसाधर्म्यात् सर्वानित्यत्वप्रसङ्गवद्धर्मान्तरात् साध्यधर्मोपपत्तिप्रसङ्गेन प्रत्यवस्थानमनित्यसमः । अन्वर्थसंज्ञा तु साध्यधर्मसमेति । कथं पुनरियमविशेषसमातो भिद्यते । तत्र पक्षादेरविशेषमात्रापादनात्, इह तु विपक्षस्य सपक्षत्वापादनाद्विशेषः, परिकरस्तु तद्वदेव ॥ ३२ ॥

पूर्वोत्तरजात्योरभावनिरूप्यत्वेन सङ्गतिः । ननूदाहरणविशेषनिष्ठत्वात् साधर्म्यमात्रस्य सूत्रे श्रवणाच्चाव्यापकं लक्षणमित्यत आह—अस्यापीति । अत्राद्यप्रतिषेधसूत्रे सामान्यतः प्रतिषेधश्रवणात् द्वितीयप्रत्युत्तरसूत्रे च धर्ममात्रश्रवणात् साधर्म्यमात्रस्योपलक्षणत्वे सूत्रकारानुमतिरुन्नीयते, अनित्यपदोपलक्षणत्वे तु साधर्म्यात्तुल्यधर्मोपपत्तेरित्यस्यैव जातिसामान्यलक्षणानुपपत्तिप्रत्यवस्थानपदसहितस्य लक्षणत्वोपपत्तेः सर्वानित्यत्वपदस्योदाहरणार्थतया भेदस्वमतिरुन्नीयते । एवंप्रकाराणामिति । न चाकृतिगणत्वेनोपपत्तिसमायामेवैतदन्तर्भाव इति वाच्यम्, उक्तन्यायेनात्राप्युपलक्षणावस्थितावत्रैवान्तर्भावस्योचितत्वादन्यथा प्रकृतोदाहरणस्यापि तत्रैवान्तर्भावे सूत्रमेवेदमनारभ्यं स्यादिति सूत्रे साधर्म्यनित्यत्वपदे आपाद्यापादकपरे धर्ममात्रोपलक्षणपरे आपाद्यापादकसामान्योपस्थितावश्यकत्वेनाकाङ्क्षितत्वेन च तदन्वयसम्भवे च विशेषस्यानाकाङ्क्षितत्वेनानन्वयादिति भावः । तदेव विशदयति—अत एवेति । न च पूर्वं साधर्म्यपदमुपलक्षणमुक्तमिदानीं तद्विवक्षितमिति विरोधः, तुल्यधर्मोपपत्तिमात्रं विवक्षितमित्यत्रानित्यसाधर्म्यं विशिष्य नोक्तमित्यत्र तात्पर्यात् धर्मान्तरादिति परोक्तप्रयोजकसाम्यमात्रेण विवक्षाभिमतस्य साध्यवत्त्वप्रसञ्जनमनित्यसम इति लक्षणार्थः । केवलान्वयिनि विपक्षाभावेऽपि विपक्षारोपान्नाव्यापकत्वं न चैवं सपक्षमेव यत्र विपक्षभ्रमेणोपन्यस्य यदा सपक्षत्वं बोध्यते तदा सदुत्तरातिव्याप्तिः जातिसामान्यलक्षणेनैव व्यावर्तितत्वात् सपक्षस्य तु विपक्षापादनमाकृतिगणान्तर्गतमेव कथमिति अत्राप्यविशेषमात्रस्यासञ्जनमिति भावः । इह त्विति । ननु विशेष एकत्वमेकधर्मत्वं वेति विपक्ष-

1. NS. 5. 1. 32.

दुष्टत्वचिन्तासूत्रम्—

[1]साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात्।

इदं विवक्षितासाधकम् असाधकसाधर्म्यात् अस्ति च तदस्य घटधर्मत्वं नामेति जातिवाक्यार्थः। अयञ्च स्वात्मानमपि व्याप्नोति। इदमपि वाक्यं विवक्षितमर्थं न प्रतिपादयति तदप्रतिपादकसाधर्म्यात्। अस्ति च तदस्य प्रतिज्ञाद्यवयवयोगित्वं स्थापनावाक्येनेति व्याघातः, तदिदमुक्तं प्रतिषेध्येन साधर्म्यादिति। अथवा, नेदं विवक्षितार्थसाधकं समानधर्मत्वात् सत्त्ववदिति जातिवाक्यार्थः। सोऽपि तथा समानधर्मत्वादित्यस्मादपि न विवक्षितसिद्धिः, समानधर्मत्वात्, यथा प्रतिषेध्यसाधर्म्यात्। प्रतिषेध्यञ्च तत् साधर्म्यञ्चेति कर्मधारयः। यद्वा, नेदं विवक्षितार्थसाधकं घटधर्मत्वात् सत्त्ववदिति जातिवाक्यार्थः। सोऽपि तथा नियमानभ्युपगमात्। तथा हि नेदं प्रतिषेधसाधकम् आकाशधर्मत्वात् स्थापनावाक्यवदिति व्याघातः। तस्मात्साधर्म्यवैधर्म्यमात्रमत्राविवक्षितम् ॥ ३३ ॥

---

स्यापि पक्षत्वापादन एकधर्मवत्त्वमस्त्येव, न च सामान्यलक्षणाविशेषापादनमविशेषसमा, इयन्तु साधर्म्येणेति वाच्यम्। विशेषणवैयर्थ्यात्तल्लक्षणसूत्रात्तदनुपस्थितेः ; तत्र चेयमविशेषापादनरूपा सपक्षत्वलक्षणस्य धर्मस्य विपक्षमात्रनयनात्, अविशेषसमायास्तु सम्भूयाविशेषत्वमापाद्यं, तत्रैव सूत्रपदादुपस्थितेरित्येके। अविशेषस्य सप्रतियोगिकत्वात् साध्यवत्त्वरूपस्य सपक्षत्वस्यातथात्वात्तदसङ्करः, यत्र च सप्रतियोगिकमेव साध्यं विपक्ष आपाद्यते तत्र सङ्करोऽप्यदोष इत्यन्ये ॥ ३२ ॥

तदस्येति। तदसाधकधर्मस्य इत्यर्थः। स्थापनेति। पराभ्युपगमादसाधकेन प्रतिषेधसाधकेनोभयसिद्धेनेत्यर्थः। अथवेति। असाधकत्यागेन पक्षान्तरत्वम्। सोऽपीति। सोऽपि जातिवाक्यार्थोऽपि तथा विवक्षितार्थोऽसाधक इत्यर्थः। प्रतिषेध्यं चेति। स्थापनावाक्यगतमेवेत्यर्थः। यद्वेति। समानपदत्यागेन पक्षान्तरवत्त्वं व्याप्त्यनभ्युपगमे बीजमाह—तथा हीति। आकाशधर्मत्वादिति। स्थापनावाक्यस्य शब्दत्वाच्छब्दस्य चाकाशधर्मत्वाविप्रतिपत्तेरित्यर्थः। उत्तरसूत्रार्थमवतारयन्नेवोपसंहरति—तस्मादिति ॥ ३३ ॥

---

1. NS. 5. 1. 33. The printed editions of the Sūtra read 'प्रतिषेध्यसाधर्म्याच्च'.

अपि तु नियमः, तत्प्रतिपादनार्थमाह—

[1]**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथा भावान्नाविशेषः ।**

निगदव्याख्यातमेतत् । 'धर्मस्ये'ति 'तस्य चोभयथा भावादि'ति च वचनाल्लक्षणसूत्रमुपलक्षणं बोध्यम् । अनेन नियमरूपयुक्ताङ्गहीनत्वं दर्शितम् । अविशेषसमावच्च समाधेरुपक्रम इति ॥ ३४ ॥

[2]**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ।**

अत्राप्यनित्यशब्देन सर्व एव विशेषणधर्मा उपलक्ष्यन्ते । 'नित्यमनित्यभावादि'त्यनेन तदतद्रूपताविकल्पः । स च सारूप्यवैरूप्याभ्यां द्विरूपः । 'नित्यत्वोपपत्ते'रित्यनेन विवक्षितानुपपत्तिमात्रम् । तेनायमर्थः—विवक्षितधर्मस्य

---

सूत्र उभयथाभावो व्याप्त्यव्याप्तिरूपः । ननु यदि कार्यत्वमनित्यत्वं साधयेत् सत्तापि तर्हि साधयेदिति विशिष्टप्रत्यवस्थाने कः समाधिर्वक्तव्य इत्यत आह—[3]अविशेषसमावदिति । सप्तमीसमर्थाद् वतिः, तेन हेत्वाद्यपरिगृहीतदृष्टान्तमात्रस्य साधकत्वे यथा तत्र व्याघातस्तथात्रापीत्यर्थः ॥ ३४ ॥

धर्म्यनु(?)तदतद्रूपताविकल्पस्य धर्मोपस्थितिहेतुत्वादनित्यधर्मोपस्थित्यनन्तरं नित्यसम इति लक्षणम् । अत्रेति । भवति हि व्याख्यातार्थप्रतिपत्तिर्न हि सन्देहादलक्षणमित्युपदेशपरम्परया सूत्रकारस्योपलक्षणत्वेऽनुमतिरुन्नीयत इति भावः । अनित्यशब्देनेति । सप्तम्यन्तेनेत्यर्थः । स चेति विकल्पः, सारूप्येणैव रूपेण तदतद्रूपताविकल्पः, यथा शब्दोऽनित्य इत्यत्रानित्यत्वमनित्यं नित्यं वा, आद्ये तद्विनाशे शब्दो नित्यः स्यात्, अन्त्येऽपि तथा धर्मिविनाकृतस्य सामान्यसमयातिरिक्तधर्मस्यानवस्थितेः रूपान्तरेण तदतद्रूपाविकल्पस्तु वैरूप्येणेत्यर्थः । यथा तत्रैवानित्यत्वं शब्दाभिन्नमभिन्नं वा ? आद्ये, धर्मधर्मिभावानुपपत्तिः, अन्त्ये, साध्यपक्षयोरन्यतराभावः, तत्राद्यः सूत्रस्य मुख्यार्थोऽन्त्यस्तूपलक्ष्य इत्यर्थः । तदनुरूपं व्याचष्टे—तेनेति । सूत्रे विशेषश्रवणेऽपि धर्मसामान्योपस्थितेरावश्यकतया तेनैवाकाङ्क्षितधर्मस्य यत्किञ्चिद्विरुद्धरूपकल्पद्वारा धर्मिणि तद्विशिष्टत्वनिराकरणेन प्रत्यवस्थानं नित्यसम इति लक्षणार्थः, अत एव नानुपलब्धिसमसङ्करः, तत्र धर्मस्यैवमुच्चत्ववृत्तिविकल्पात् स्वविषयत्वाविषयत्वविकल्पेन प्रत्यवस्थानात् ।

---

1. NS. 5. 1. 34. 2. NS. 5. 1. 35. 3. MS. 'अविशेषसमवाया-'.

तदतद्रूपताविकल्पानुपपत्त्या धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमा। इयञ्च संज्ञा धर्मान्तरे सुखदुःखशब्दवद् गौणी। गुणयोगश्च लक्षणमुक्तम्—अन्वर्था तूपरञ्जकधर्मसमेति। तेन नित्यानित्यभिन्नाभिन्न-कार्याकार्यास्तिनास्ति-सत्यासत्य-सदसत्-स्थिरास्थिरैकानेकानुवृत्ता। ननु वृत्तविशेषणाविशेषणसापेक्षानपेक्षक्रमाक्रम-वाच्यावाच्यपरोक्षापरोक्ष-वर्त्तमानावर्त्तमान-हेयाहेय-सहितासहित-विरुद्धाविरुद्ध-ज्ञाताज्ञातेष्टानिष्ट--द्विष्टाद्विष्ट-कृताकृत-शक्ताशक्तोत्पन्नानुत्पन्न-व्यवहृताव्यवहृतेत्याद्यवान्तर-घटाघट-सन्दिग्धासन्दिग्धादि-सर्वविकल्पोपक्रमाः संगृहीता भवन्ति।

तदियमेवं प्रवर्तते—अनित्यः शब्द इति प्रतिज्ञायामाह—अनित्यत्वयोगादनित्यः तदनित्यत्वमनित्यं नित्यं वा? प्रथमे तदभावात् कथमनित्यः? द्वितीयेऽपि धर्मस्य सदातनत्वाद्धर्मिणोऽपि तथात्वे कथमनित्यः? न हि धर्मिनिरपेक्षस्य धर्मस्यावस्थानसम्भव इति भाष्यादौ सुव्यक्तमेतत्। अपि च, अनित्यत्वं यदि नित्यं कथमतदाकारमन्यत्र तदाकारतामापादयेत्। अतिप्रसङ्गात्। न हि नीलं नीलीपुष्पं स्फटिके रक्ताकारतामापादयति। नाप्यनित्यमेव तदेतदाकारतामापादयति। रक्तजपाकुसुमयोगात् स्फटिकारुणिमवद् भ्रान्तत्वप्रसङ्गात्। अतिप्रसङ्गाच्च। तदाकारघटयोगात् पटस्यापि घटाकारतापत्तेः। अपि च, तदाकारमप्यनित्यत्वम-

---

ननु पूर्वमुक्तमन्वर्थसंज्ञैवामूषां लक्षणम्, न च कृतकत्वादनित्यत्वानुमानं विहायानित्यसमपदं सङ्गतार्थमित्यत आह—इयञ्चेति। ननु नित्यसमेति शङ्कायास्तथाभावाच्छक्तिरेवमुक्ता न गौणत्वं मुख्यार्थापरिचयेन दृष्टान्तमुखपदवैयर्थ्याच्च नित्यपदान्नित्यपदोपस्थितेरावश्यकत्वादुपरञ्जकधर्मकत्वेन शक्यलक्ष्यसाधारणेनाजहत्स्वार्थलक्षणयैवोपचारेण चोपपत्तेः शक्यकल्पनान्नित्यशब्दाभिप्रायेण गौणत्वव्युत्पादनेन मुख्यार्थपरिचयाच्च। ननु दृष्टान्ते साधनपारतन्त्र्यादिधर्मयोगवत् प्रकृते किंयोग इत्यत आह—गुणयोगश्चेति। अवान्तरेति। अनित्यस्यावान्तरविशेषा घटादयो ज्ञानस्य सन्देहादय इत्यर्थः।

विकल्पे नित्यत्वस्योपक्रमेऽपि भाष्याद्युदाहरणानुरोधेनानित्यत्वमुदाहरति—अनित्य इति। अत्रैव रूपान्तरेण प्रत्यवस्थानमाह—अपि चेति। नित्यप्रत्ययस्यान्यथासिद्धिमाह—रक्तेति। अतिप्रसङ्गं विवृणोति—तदाकारेति। न ह्यन्ययोगादन्यस्य तथात्वे घटयोगात् पटस्यापि घटाकारत्वापत्तेरित्यर्थः। तदाकारमेव धर्मिणि तदाकारतामापादयतीति पक्ष एव प्रत्यवस्थाने प्रकारान्तरमाह—अपि चेति। अनित्यत्वधर्मयोगो ह्यनित्यत्वाकारज्ञानहेतुरेव नित्यधर्मात्मकं वा? प्रथमेऽनवस्था, अन्त्ये तादात्म्यधर्मधर्मिभावानुपपत्त्या भेदस्थितौ

नित्यत्वान्तरयोगात् स्वभावतो वा। न प्रथमोऽनवस्थानात्। न द्वितीयः, अतत्स्वभावानां घटादीनां नित्यत्वप्रसङ्गात्। तेषामपि तत्स्वाभाव्ये द्रव्यत्वव्याघात इति सर्वथा न सम्भवति प्रतिज्ञार्थः। एवं हेतुदृष्टान्तयोरप्यनेनैव क्रमेण धर्मान्तरेऽप्युत्थानमस्य स्वयमूहनीयम्। बौद्धचार्वाकवेदान्तिनां चात्रैव निर्भरः। सेयं स्वरूपेण विरूपेण तु नित्यत्वे भिन्नत्वाभिन्नत्वादिना अनित्यत्वे कार्यत्वाकार्यत्वादिना घटत्वादौ नित्यत्वानित्यत्वादिनेत्यादि। तथा हि नित्यः शब्द इति प्रतिज्ञायां नित्यत्वयोगान्नित्यः। तत् किं ततो भिन्नमभिन्नं वा? भिन्नं चेत्तदपि भिन्नत्वयोगादित्यनवस्था। अन्यस्यान्यधर्मत्वेऽतिप्रसङ्गो वा, अभिन्नत्वे त्वेकशेषस्थितावाश्रयासिद्धिर्वा कालात्ययापदेशो वा घटादेरतद्रूपतायामसाधारण्यं वेति। अनित्यः शब्द इत्युक्ते अनित्यत्वं कार्यमकार्यं वा? कार्यत्वे न सहोत्पत्तिः धर्मधर्मिभावानुपपत्तेः, अत एव न पूर्वोत्पत्तिः। पश्चादुत्पत्तौ तदभावे नित्यः शब्द इति स्यात्। तथा च न तत्रानित्यतावकाशो विरोधात्। अकार्यत्वे तु धर्मिणोऽप्यकार्यत्वं, तथापि कुतो नित्यत्वं विरोधादित्यादि। घट इत्युक्ते घटत्वयोगाद् घटः, तत् किं नित्यमनित्यं वा, प्रथमे घटस्यापि नित्यत्वप्रसङ्गः तद्धर्मित्वात् नित्यपरम-

---

तत्स्वभावातिरिक्तानां घटादीनामनित्यतासम्भवः। न चानित्यत्वं तयोरेकमनुगतमस्तीति वाच्यं, तथाप्येकं प्रत्यवस्थानसौकर्यादित्यर्थः। अत्रोक्त्यसम्भवं निराकरोति—बौद्धेति। वैरूप्योदाहरणस्य भाष्यादावभावात्तत्राद्यमेवमनित्यत्वमुदाहरति—निरूपणे त्विति। भिन्नाभिन्ने(?)त्यादिनेत्यादिपदेन कार्यत्वाकार्यत्वादित्यनैक्या(?)दिपदेन भिन्नाभिन्नत्वादि गृह्यते। एकशेषेति। परस्परान्योन्याभावविरहस्थितिरूपायामेकशेषस्थितौ साध्यान्नित्यत्वेन पक्षाभावादाश्रयासिद्धिः, आत्माश्रयप्रसङ्गेन स्वस्मिन् साध्यस्य वृत्तेर्बाध इत्यर्थः। घटादेरिति। ननु हेतोः सकलसपक्षविपक्षाणां व्यतिरेकादसाधारण्यं, न तु नित्यत्वस्य साध्यस्य व्यतिरेकात्। अत्राहुः—असाधारण्यशब्दोऽयं न हेत्वाभासविशेषपरः, किन्तु यौगिकः। तथा चासाधारण्यापक्षैक्यनियमात् साध्यविकलो दृष्टान्त इत्यर्थः। तथापि नित्यत्वे साध्ये घटो दृष्टान्त इति चेत् न, घटादिरित्यतद्गुणसंविज्ञानबहुव्रीहिणा व्योमादेर्विवक्षितत्वादनित्यत्वेऽपि साध्ये यथोपदर्शितं प्रत्यवस्थानं सुकरं, न तु नित्यत्वे भिन्नाभिन्नत्वाद्युक्तिमात्रेण तत्रैवेदं प्रत्यवस्थानमिति भ्रमः कर्त्तव्य इति सूचयितुं घटादेरित्युक्तम्। यद्वा, साध्यवद्धेतुधर्मोऽपि यथोक्तभेदाभेदविकल्पेन खण्डनं सावकाशं, तथा सति चाभेदे चायं विशेषो हेतुसाध्ययोरेकशेषस्थितौ स्वरूपासिद्धिराश्रयासिद्धिर-

महद्धर्मिव्योमवत् । अनित्यत्वे सामान्यरूपत्वव्याघातः । कार्याकार्यविकल्पानुपपत्तिश्चेत्यादिशुष्कतर्कवादिमतानुसारतः प्रतिपत्तव्यम् । तदस्या धर्मधर्मिभावो द्वारं स एव दूष्यः, प्रतिकूलतर्कत्वमारोप्यं तदाभासा चेयमिति ॥ ३५ ॥

दुष्टत्वमूलचिन्तासूत्रम्—

**[1]प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः ।**

अनित्यतया प्रतिषेध्ये शब्दे नित्यमनित्यभावादित्ययं हेतुर्यदि सिद्धः, प्रतिज्ञार्थो न सिध्यति, प्रतिज्ञार्थश्चेन्न हेत्वर्थः, व्याघातात् । अनित्येऽनित्यत्वोपपत्तेर्यः प्रतिषेधः तस्याभाव इति योजना इत्यक्षरार्थः । तात्पर्यन्त्वस्य यथायथं व्याघातमात्रोपलक्षणे । यत्तु तदाकारमतदाकारं वा नान्यत्र तदाकारतामापादयेदतिप्रसङ्गात् । तदसत्, धर्म एव धर्मिणस्तदाकारता, न तु तेनापाद्यमर्थान्तरम् । तदिदमयुक्ताङ्गाधिकत्वं तदाकारापादकत्वमयुक्तमङ्गमधिकृत्य चोद्यप्रवृत्तेः । कथमन्यस्यान्य आकार इति चेत्, न ; आकारशब्देनात्मनोऽनभिधानात् । धर्मस्तु भिन्न एव धर्मिणः । अन्यथा विरोधात् । काल्पनिकेऽपि धर्मधर्मिभावे तथाभूतस्यैव भेदस्य पुरस्कारात् । न हि सर्वथा भेदानुल्लेखे स एव तद्विशिष्ट इति व्यवहारः । तथाप्यतिप्रसङ्गः कुतो न स्यात् । यथादर्शनं स्वभाव एव व्यवस्थानात् । अत एवान्यसमवेतोऽप्यन्यस्य धर्म उप-

---

साधारण्यं वा, तथा सति शब्दत्वादित्यादेः सकलपक्षव्यावृत्तत्वात् । यद्वा, हेतोः पक्षाभेदेऽसाधारण्यसपक्षधर्मतेत्यर्थः । **कार्याकार्यविकल्पेति** । घटत्वं कार्यमकार्यं वा ? आद्ये जातित्वानुपपत्तिः, अन्त्ये घटोऽप्यकार्यः स्यादकार्यधर्मत्वादित्याद्यूहनीयमित्यर्थः । प्रतिकूलतर्कत्वमित्यापाततः । वस्तुतस्तु सकलदोषदर्शनाभासत्वमतो न प्रागापादितबाधादिविरोधः ॥ ३५ ॥

**तात्पर्यमिति** । न च नित्यधर्मयोगित्वेन नित्यत्वापादनं न व्याघात इति वाच्यं, तत्रापि हेत्वसिद्धिपरीहारार्थं नित्यस्यानित्यत्वावश्याभ्युपगम्यत्वे व्याघातात् । न ह्यस्ति सम्भवस्तत्रानित्यत्वं सर्वदा नित्यत्वञ्चेति । **अन्यथेति** । न हि स एव तद्वा न भवतीति भावः । **तथाभूतस्यैवेति** । काल्पनिकस्यैवेत्यर्थः । सूत्रतात्पर्यं व्याचष्टे—

---

1. NS. 5. 1. 36.

लब्ध्यादिः स्वभावादेव व्यवतिष्ठते । तदिदं युक्ताङ्गहीनत्वम् । नायमेतस्य धर्मोऽन्यत्वादन्यसमवेतत्वाद्वेति व्याप्त्यसिद्धेः स्वोक्तिव्यापनाच्च व्याघातः । इदमसाधकमित्यत्रासाधकत्वयोगादसाधकं तत् किं तदाकारमतदाकारं वा भिन्नमभिन्नं वेत्यादिविकल्पोपक्रमस्य दुर्वारत्वात् । एवमन्यत्वादन्यसमवेतत्वादि च हेतौ घटादिदृष्टान्ते च द्रष्टव्यम् तदिदमुक्तं 'नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्ते'रिति । धर्मधर्मिभावानभ्युपगमे तवापि हेतुसाध्यौ न स्यातां तदुपपत्तौ वा न प्रतिषेध इत्यर्थः । तदेवं स्फुटो व्याघातः । व्याप्तिभङ्गात्तु युक्ताङ्गहीनत्वमर्थलभ्यम् । यथायथं चात्राभ्युपगमो द्रष्टव्यः । यथोपलब्धियोगादुपलब्धव्यवहारस्तत्रापि तथेति । उक्तियोगादुक्तस्तत्रापि तथा । कृतियोगात् कार्यं तत्रापि तथेति तस्मात्तर्काङ्गपञ्चकान्यतमहानिरत्रानुसन्धेयेति संक्षेपः ॥ ३६ ॥

## [1]प्रयत्नकार्यानेकत्वात् कार्यसमः ।

यत्तावद् बौद्धेन—

"साध्येनानुगमात् कार्यसामान्येनापि साधने ।
सम्बन्धिभेदाद् भेदोक्तिर्दोषः कार्यसमो मतः" ॥

इति दर्शितं तद्व्यापकानुपलब्धिपर्यवसानमपकर्षसमसंगृहीतमेव । तथा हि,

---

धर्मधर्मिभावेति । हेतुसाध्ययोरपि पक्षधर्मत्वादिति भावः । व्याप्तिभङ्गादिति । नायमेतस्य धर्मोऽन्यत्वात्, घटपटवदित्यादौ विपक्षबाधकाभावो नेत्यर्थः । यथायथमिति । अन्यसमवेतस्याप्यन्यधर्मत्वेऽन्यस्यान्यधर्मत्वे वेत्यर्थः । अत्र स्थापनावादिन इति शेषः । तत्रान्यस्यान्यधर्मत्वं स्फुटमिति तदुपेक्ष्यान्यदुदाहरति—अत्रापीति । उपलब्धिरप्युपलब्ध्यन्तरयोगादेवोपलब्धिरिति व्यवह्रियत इत्यर्थः । एवमुत्तरत्रापि नेयम् । तस्मादिति । तत्रानुकूलत्व-मिथोविरोधौ द्वौ मूल्यशैथिल्यमतस्तृतीयं विपर्ययापर्यवसानमिष्टप्रसञ्जनत्वे इति तर्कदोष इति दोषपञ्चकप्रयोजकमित्यर्थः ॥ ३६ ॥

पूर्वोत्तरजात्योर्विकल्पसमुत्थानत्वेन एककार्यत्वात् सङ्गतिः । यथाश्रुतस्य सूत्रस्य स्वपरसाधारण्येन परमतं दूषयितुं कीर्त्तिवार्त्तिकं कीर्त्तयति—यत्तावदिति । अस्यार्थः—साध्येन सिषाधयिषितधर्मणा सपक्षानुगमाद्धेतोः कार्यत्वसामान्यहेतुतयोपन्यस्तपक्षादेः सम्बन्धिनो भेदेन कार्यत्वहेतोर्भेदापादनं कार्यसम इति दूषयति—तद्व्यापकेति । यत्तदनित्यत्वव्याप्तं कार्यत्वं

---

1. NS. 5. 1. 37.

अनित्यः शब्दः कार्यत्वाद् घटवदित्युक्ते घटस्याप्यन्यत् कार्यत्वं मृद्दण्डादिपूर्वकं शब्दस्याप्यन्यत्ताल्वादिसंयोगविभागपूर्वकमिति वदन् व्यक्तं मृद्दण्डादिव्यापकव्यावृत्तेर्व्याप्यकार्यत्वव्यावृत्तिरित्याह। तथा चापकर्ष एव। भेदोक्तिमात्रपर्यवसाने त्ववर्ण्यसम इति। यत्तु न्यायभाष्यादौ प्रयत्नानन्तरीयकत्वादित्युक्ते किमिह प्रयत्नानन्तरं जन्म विवक्षितम् उपलम्भो वेति विकल्प्य प्रथमेऽसिद्धिर्द्वितीये अनैकान्तिकत्वमिति तज्जात्युत्तरमेव न भवति। अन्यतरासिद्धेरनैकान्तिकत्वस्य च प्रतिषेधसमर्थत्वात्। अनात्मव्याप्तेश्च। असिद्धत्वादसिद्धिर्जात्युत्तरमसिद्धस्यासमर्थत्वादिति चेत्, न; एवंरूपस्यासामर्थ्यस्य च्छलादावपि गतत्वात्। आरोप्यदोषाभिधानाज्जातिरिति चेत्, न; तस्य च्छलधर्मत्वात्। न चारोपेऽपि विकल्पतो विवक्षितस्याप्यर्थस्य दूषणादिति। तत् कथमेतत्? यथाकरमेव। तथा हि प्रयत्नस्य कार्यं विषयः। हेयोपादेयतया व्यवहर्त्तव्य इति यावत्। तस्यानेकत्वं पारमार्थिकत्वापारमार्थिकत्वं तस्मात् प्रत्यवस्थानमिति।

---

तद् दण्डादिरूपव्यापकव्यावृत्तेः शब्दे नास्तीत्यसिद्धतायां तात्पर्यं अपकर्ष इत्यर्थः। ननु नेयमपकर्षसमा व्यापकाभिमतव्यावृत्त्यव्याप्यव्यावृत्तेरप्रसञ्जनात् सम्बन्धिभेदमात्र एव तात्पर्यात्। अत एव नावर्ण्यसम इति लक्षणम्, अस्माकमेवंविधानामाकृतिगणान्तर्भावः। अनात्मेति। अस्वव्याघातकत्वादित्यर्थः। न च सदुत्तरस्याप्युक्तिमात्रदोषेण सन्दिग्धाश्रयासिद्ध्यापादनजातिर्भविष्यतीति वाच्यम्। भाष्योक्तापादनस्य वक्ष्यमाणन्यायेनैव जातित्वोपपत्त्याद्युक्तदोषकल्पनात्। यथाश्रुतवार्त्तिकजातिलक्षणमाशङ्कते—असिद्धत्वादिति। प्रकर्षनिकर्षादिना शब्दस्योत्पत्तेः साधनादसिद्धता सती न हेतुरसाधकत्व इत्यर्थः। एवञ्च संख्यायोगिकमूलत्वाद्यसिद्धमेकस्यैव कम्बलस्य सत्त्वादित्यत्राप्यसिद्धिरसिद्धा अभिनवकम्बलत्वस्य सिद्धेरिति च्छलमप्येवं जातिः स्यादिति परिहरति—एवंरूपस्येति। सिद्धं यद्दूषणासमर्थमुत्तरं जातिर्न चैवं छलमिति भावः। अन्यार्थतारोप्यदूषणाप्रसङ्गतया समर्थप्रसङ्गतया जातिः स्यादिति शङ्कते—आरोप्येति। कल्पितदूष्यं दूषणं छलमिति लक्षणयोगेन छलमेवेति निराकरोति—तस्य न चेति। सकृदुच्चरितपदस्य विरुद्धनानार्थपरतैकता न सम्भवतीति सर्वत्र विकल्पादूषणाभिधाने सति नारोप इत्यर्थः। तथा च यथाश्रुतभाष्योपदर्शितकार्यसमासदुत्तरत्वान्न जातिः, कथञ्चिदसदुत्तरत्वापादने तु च्छलसाधारण्यमतो जातित्वापादकरूपाभावान्नायं जातिरिति प्रघट्टकार्थः। अत्र सूत्रे यत्कार्यानेकत्वादिति पदं यदि प्रयत्नकार्यमनेकमुत्पद्यते व्यक्तिरूपमित्येवं व्याख्यायेत तदोदाहरणविशेषपुरस्कारेण लक्षणस्याजातेः सर्वसाधारण्याभावः। अथाप्रयत्नविषयत्वादित्यर्थे-

एवञ्च प्रवर्तते—अनित्यः शब्दः कार्यत्वादित्युक्ते भवेदेवं यदि शब्दः कार्य इति परमार्थतो निश्चीयेत, तदेव तु दुर्लभं प्रमाणाभावात्। प्रयत्नानन्तरोपलब्ध्या हि तत् साधनीयं सा चानैकान्तिकीति। एवमियं सर्वव्यापिका स्यादपकर्षावर्ण्य-समाभ्याञ्च भिद्यते। न च प्रसङ्गसमेयम् अनवस्थानुत्थापनात्। प्रमाणदूषण-व्यवस्थानाच्च। न च च्छलमिदं वाद्यभिप्रायवर्णनेऽपि शब्दार्थविकल्पोपपत्तेर-भावात्। न च समर्थमिदं स्वयमुत्थापितस्य हेतोर्दोषेणानुत्थापितस्य पराभिप्रेतस्य दूषयितुमशक्यत्वादिति। एवमेव भाष्यादेरपि तात्पर्यम्। उदाहरणानुरोधात्त्व-क्षरार्थस्तथा व्याख्यातः। अत एवाव्याप्तिभीतष्टीकाकार आह—'उदाहरणपूर्वकं

---

स्तदा प्रयत्नपदवैयर्थ्यम्। कार्यपदादेव तल्लाभादित्यतः कार्यपदं व्यवहर्त्तव्यार्थतया व्याचष्टे—प्रयत्नस्येति। प्रयत्नानन्तरभावी रागात्मा खलु व्यवहारः। पारमार्थिको तद्रूपश्च मुख्यामुख्य-रूप इत्यर्थः। अत्र 'कृतकत्वा'दित्यस्यामुख्यार्थस्य साधकत्वान्मुख्यार्थत्वं वाच्यम्, तच्चासिद्धम्। अथ तत्साधनाय यत्नानन्तरोपलब्धिर्वक्तव्या, सा चानैकान्तिकीति तात्पर्यम्। मुख्यार्थ-परित्यागफलमाह—एवमिति। साधारणन्तु वाद्युक्ते दोषमाशङ्क्य तदुद्धारार्थं स्वोत्प्रेक्षित-प्रमाणदूषणेन वाद्युक्तस्यासाधकत्वसाधनं कार्यसम इति लक्षणम्, न तु प्रमाणत्वेनोपन्यस्ते कार्यत्वे प्रमाणगवेषणाक्रमात्। प्रसङ्गसमेयं स्यादित्यत आह—न चेति। अनवस्था-पर्यवसायिनी प्रसङ्गसमा, अत्र तु प्रमाणगवेषणामुपक्रम्य स्वयमेव किञ्चित्प्रमाणमाशङ्क्य तद्दूषणेन पर्यवसानमित्यर्थः। किञ्च प्रसङ्गसमायां प्रमाणे किं प्रमाणं, तत्रापि किमिति प्रमाणपरम्पराजिज्ञासामात्रमत्र तु विषयः, प्रमाणविशेषदूषणेन प्रत्यवस्थानमित्याह—प्रमाणदूषणेति। ननु प्रकर्षनिकर्षादिना शब्दकार्यतां मन्वानस्य प्रयत्नानन्तरोपलब्धस्य कार्यत्वसिद्धावभिप्रायमारोप्य दूषणं छलमेव स्यादित्यत आह—न चेति। नन्वेवमपकर्षा-वर्ण्यप्रसङ्गसमव्यतिरेके छलत्वाभावेऽसदुत्तरमेवास्त्वित्यत आह—न चेति। प्रतिवादिना वाद्युक्तहेतुसाधकत्वेन वाद्यभिप्रायविषयतामारोपितस्य प्रयत्नानन्तरोपलब्ध्यात्मकस्य हेतो-र्दूषणेनानुत्थापितस्य हेतुसाधकत्वेनानुद्भावितस्य पराभिप्रेतस्य प्रकर्षनिकर्षादेर्दूषकत्व-मशक्यत्वात्। साधकोपसंहारानुपपत्तिसम इत्यर्थः। नन्वेवं प्रमाणं स्थिरीकृत्य तन्मूल-प्रमाणत्वेनापरमाशङ्क्य तत्र दूषणमित्यस्यार्थस्य भाष्यवार्त्तिकयोर्वार्त्तापि नास्तीत्यत आह—एवमेवेति। तथापि प्रयत्नानन्तरीयकत्वहेतुश्रृङ्गग्राहिकया प्रवृत्ततया भाष्यवार्त्तिक-व्याख्यानपरटीकाविरोध इत्यत आह—उदाहरणेति। टीकाकृतेति शेषः। कथमेव-मुन्नेयमित्यत आह—अत एवेति। अव्याप्तिर्लक्षणस्य। ननु तथा सूत्रं व्याचक्षाणयो-

व्याचष्ट' इति । तथा हि, 'प्रयत्नानन्तरमात्मलाभश्चे'त्यादि भाष्यं तावत् सुगमं प्रयत्नापेक्षत्वस्य हेतोः स्वयमुत्थापितस्यानैकान्तिकत्वमुपवर्ण्य 'तत् किमि'त्यादिना मौलस्य हेतोः सन्दिग्धासिद्धत्वव्यवस्थापनात् । तदेव वार्त्तिककारोऽप्याह—'किञ्चिदि'त्यादि । वादिना हि कार्यत्वेन हेतुना शब्दानित्यत्वं साधयितुं प्रयोगः कृतः, न तु कार्यत्वमेव साधयितुं किञ्चिदुपन्यस्तम् । तत्रासिद्धं कार्यत्वं मन्यमानो जातिवादी तत्साधनाय प्रयत्नानन्तरोपलब्धिरेव हेतुरनेन वक्तव्य इति स्वयमुत्प्रेक्ष्य दूषयति स्म । सोऽयं स्वयमुत्प्रेक्ष्याध्यारोपः । यदाह—'कार्यः शब्दः प्रयत्नानन्तरोपलब्धे'रिति हेतुमनैकान्तिकं चोदयतीति मौले हेतौ दोषमाह—'अथे'ति । अथ प्रयत्नानन्तरं जन्मासाधितमेवेति शेषः । सुगममन्यत् । अनेनाभिप्रायेण मूलमूलिप्रयोगसङ्करभ्रमं निवारयन्नाह टीकाकारः, 'कार्यत्वादनित्यः शब्द' इति । एवमवस्थिते प्रयोगेऽसिद्धत्वमुद्भाव्य तत्साधनाय स्वयमुत्प्रेक्षितं हेतुं प्रयत्नानन्तरीयकत्वमाश्रित्य यदाह जातिवादी तद्दर्शयति—'प्रयत्नानन्तरीयकत्वमि'त्यादि । तत् किमसिद्धत्वोद्भावनभाग एव जागर्ति, नेत्याह । तस्मात् प्रयत्नानन्तरोपलम्भ आस्थेयः, कार्यत्वसिद्धय इति शेषः । तत्र कार्यसमं प्रतिषेधमाहेति । सुगममन्यत् । अनयैव दिशा दूषणान्तरोपसंहारेणापीयं प्रवर्त्तते । एवमेव पक्षदृष्टान्तयोरपि प्रतिसन्धेया । तदयमर्थः—पक्षहेतुदृष्टान्तेषु मध्ये कस्यचिदनुमानाङ्गस्यासिद्धत्वमुद्भाव्य तत्साधकतया किञ्चित् स्वयमुत्प्रेक्ष्य तद्दूषणेनैव तत्साधकाभावोपसंहारः कार्यसमेति । तदत्र

---

भाष्यवार्त्तिकयोरुदाहरणान्तरेण लक्षणाभिप्रायः कथमुन्नीयत इत्यत आह—तथा हीति । सुगममिति । अस्मदभिप्रायेणान्यथोपपत्तेरिति शेषः । तदुपपादयति—प्रयत्नापेक्षत्वस्येति । अन्यथा प्रयत्नानन्तरीयकत्वादित्यस्य शब्दानित्यत्वहेतोः प्रयत्नानन्तरमात्मलाभमर्थं व्याख्याय प्रयत्नानन्तरमात्मनाशेत्यादि दूषणं स्थापनया सङ्गच्छेतेत्यर्थः । मौलस्येति । आद्यस्य कृतकृतकत्वस्येत्यर्थः । एवं भाष्यं सङ्गमय्य वार्त्तिकं सङ्गमयति—तदेवेति । सोऽयमिति । वार्त्तिककारेणोक्त इति शेषः । ननु तत्साधकसाधनस्य दूषितत्वादथ प्रयत्नानन्तरं जन्महेत्वर्थं इति कथं शङ्केत्यत आह—असाधितमेवेति । ननु मूलमूलिनोः कथं तुल्यवद्विकल्प इत्यत आह—सङ्करभ्रम इति । तामेतां टीकां पूरणेन व्याचष्टे—कार्यत्वेति । तत् किं स्वयमुत्प्रेक्षितप्रमाणेनैकान्तिकत्वोपसंहारेणैव परमियं प्रवर्तते, नेत्याह—अनयैवेति । तद् यथा, शब्दो नित्यः प्रमेयत्वादित्यत्रानैकान्तिकत्वमाशङ्क्य तत्-

व्यवहर्त्तव्यद्वैतमेव द्वारम्, व्यवहर्त्तव्यस्य पारमार्थिकत्वं दूष्यम्, मौलस्याङ्गासिद्धिरारोप्या, तदाभासा चेयमिति ॥ ३७ ॥

दुष्टत्वमूलप्रदर्शनसूत्रम्—

**[1]कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ।**

प्रयत्नशब्देनात्र तत्कार्यौ पारम्पर्येण ताल्वादिसंयोगविभागौ गृह्येते । कार्यान्यत्वे अभिव्यक्तिलक्षणे प्रयत्नस्याहेतुत्वम् । कुतः ? अनुपलब्धिकारणोपपत्तेस्तथा स्यात्, न च शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यत इत्यर्थः । एतेन कार्यत्वसिद्धावनन्यचरितार्थं संयोगविभागानन्तरोपलब्धेरिति हेतुं दर्शयता असिद्धिः कण्ठतः परिहृता । अन्यदूषणस्यान्यो विषयो न भवतीति अविषयवृत्तित्वं च दुष्टत्वमूलमर्थतो दर्शितम् । तदुत्थापितस्य चानभ्युपगमेन दूषणस्थितावपि न वादिनो हानिः काचिदिति प्रतिपादयतानुक्ते दूषणाभिधानमविषये प्रवर्त्तत इति सूचितमतोऽप्यविषयवृत्तित्वम् । तस्मादुक्ते दूषणं वाच्यं तच्चेत्तद्विषयमेव स्यात्, अन्यथा तु व्याघात इति संक्षेपः । एवं तावत् परेण जातौ प्रयुक्तायां वादिना सदुत्तरैणैवोद्धारः कर्त्तव्यः । एवं हि वादे तत्त्वनिर्णयः, जल्पवितण्डयोश्च जयपराजयव्यवस्था स्यात् । अन्यथा तु षण्ढमैथुनवन्नैकमपीति ॥ ३८ ॥

---

परिहारार्थमेतन्नानैकान्तिकम्, आकाशवृत्तित्वात्, कृतकत्ववदित्युत्प्रेक्षासिद्ध्या प्रत्यवतिष्ठते इत्यादौ पक्षेति तद्विशेषणेऽपि साध्ये चेत्यपि द्रष्टव्यम् ॥ ३७ ॥

ननु प्रयत्नानन्तरीयकत्वमपक्षधर्मः प्रथमस्यापि शब्दस्य कोष्ठवायुनोदनादिव्यवहितत्वात् प्रयत्नानन्तर्याभावादित्यत आह—प्रयत्नशब्देनेति । 'तत्कार्यावि'ति लक्षणाबीजसम्बन्धदर्शनम् असिद्धिः अमौलस्य हेतोः स्वविषयवृत्तित्वं द्वेधा विषयेण प्रवर्तते स्वविषये च प्रवर्तत इति । आद्यमाह—अन्यदूषणस्येति । अन्त्यमाह—तदुत्थापितस्येति । यावद् वक्तुं तावद्विषयेण दूषणेनोक्तं दूषणीयं त्वदुक्तविषयेण दूषणेनेत्यर्थः । प्रस्तुतत्वमाशङ्क्याह—एवमिति ॥ ३८ ॥

---

1. NS. 5. 1. 38.

तत्प्रदर्शनार्थं कथाभासरूपां षट्पक्षीमाह—

[1]प्रतिषेधेऽपि समानो दोषः ।

तथा हि, उक्तो हेतुरसिद्धः, तत्सिद्धिहेतोः प्रयत्नानन्तरोपलब्धेरनैकान्तिकत्वादिति योऽयं दोषः, स प्रतिषेधेऽपि त्वत्पक्षेऽपि समानस्तुल्यः । तत्रापि प्रयत्नस्य व्यञ्जकत्वमसिद्धं तत्सिद्धिहेतोस्तदनन्तरोपलब्धेरनैकान्तिकत्वादिति सेयं कार्यसमैव जातिरिति भवति समानो दोषः । अथवा, प्रतिषेधेऽपि प्रतिषेधहेतावपि अनैकान्तिकत्वादित्यत्र समानो दोषः । शब्दसाम्ये वाक्छलमाह, अनैकान्तिकत्वाद्यसाधकः स्यात् प्रतिषेधोऽप्यनैकान्तिको न स्वार्थं साधयेत् । न ह्ययमेकान्ततः प्रतिषेधात्मक एव, स्वसत्ताया अनिवारणात् । अथवा, समानो दोष इति दोषवत्त्वमात्रेण, तेन तवापि पक्षः सदोषः त्वदुक्तः प्रतिषेधहेतुरपि वा सदोष इत्युक्त्वा यं कञ्चिद्दोषमाहेति । तदत्र प्रथमे पक्षे, प्रतिबन्धिमात्राभिप्रायेण प्रवृत्तिर्मतानुज्ञा, दोषमनुद्धृत्येष्टापादनात् । द्वितीयपक्षे तु, अनैकान्तिकदोषाभिप्रायेण प्रवृत्तिर्निरनुयोज्यानुयोगश्च वाक्छलत्वात् । तृतीयपक्षे तु, साम्याभिप्रायेण प्रवृत्तिः, मतानुज्ञा तु दुष्परिहरा, दोषान्तराभिधानेन पूर्वदोषे विरोधाभासस्याप्यनुल्लेखात् ॥ ३९॥

---

कथाभासेति । कथोद्देश्यफलपर्यवसानेनेत्यर्थः ।

यद्यपीति, पूर्वपक्षीति, पूर्वजातिसूत्र एव पक्षद्वयषट्पक्ष्यभिधानप्रवृत्तस्तृतीयं पक्षमाहेत्यर्थः । कार्यसमैवेति । न च स्वव्याघातकत्वोद्भावने रूपत्वेन सदुत्तरमेवास्येति वाच्यं, साम्यापादनाभिप्रायमात्रप्रवृत्तत्वेन तथाभूताभिसन्धानाभावात् । द्वितीयव्याख्याने कथाभासत्वमुपपादयति—शब्दसाम्येनेति (?) । हेत्वाभासविशेषपरमनैकान्तिकपदमेकान्तानियतवाक्त्वेनारोप्य दूषयति, एवं ह्येकान्तिको भवेद् यदि सर्वमेव प्रतिषेधन्न बाधकमपि, न चैवं स्वसत्ताया अनिवारणादित्यर्थः । यद्यपि नेदं वाक्छलं वादिना स्वयमेवानैकान्तिकत्वाभिधानेन वाद्युपन्यस्ते प्रतिवादिना सञ्चाराभावात् , तथापि वाद्युक्तदोषस्यैव तत्पक्षसञ्चाराद्वाक्छलत्वं पक्षद्वयेऽप्युऽक्तिसम्भवं दुष्टत्वबीजमाह—तदत्रेति। अत्र प्रवृत्तिरित्यन्तेन उक्तिसम्भवो मतानुज्ञेति दुष्टत्वं दर्शितम् । अत्र निरनुयोज्यानुयोगश्चेति 'च'कारो विरोधे, अनेन यद्यपि दोषाभिप्रायेण प्रवृत्तिस्तथापि निरनुयोज्यानुयोग इत्यर्थः । 'वाक्छलत्वादि'त्युपलक्षणं 'जातित्वादि'त्यपि द्रष्टव्यम् ॥ ३९ ॥

---

1. NS. 5. 1. 39.

तत् किमेतस्यामेव जातावेवं प्रत्युत्तराभासक्रमो, नेत्युच्यते ; किन्तु—

[1]सर्वत्रैवम् ।

तथा हि, अनित्यः शब्दः कार्यत्वादैन्द्रियकत्वाद्वेति सदसत्प्रयोगे तद्वदाकाशसाधर्म्यादस्पर्शवत्त्वान्नित्यः किं न स्यादिति साधर्म्यसमः। अस्पर्शवदाकाशं नित्यपरममहद् दृष्टं शब्देनापि । नित्येन सता परममहता भवितव्यमित्युत्कर्षसमः। ननु यथाकाशदृष्टान्तेन परममहत्त्वं शब्दस्योच्यते, तद्वद्रूपदृष्टान्तेन तद्रहितत्वमेव किं न स्यादिति प्रतिदृष्टान्तसमः। एवं तर्हि तथा निःस्पर्शमुभयथादृष्टं किञ्चिदश्रावणं रूपादि किञ्चिच्छ्रावणं शब्दादि तथा किञ्चिन्नित्यं भविष्यत्याकाशादि किञ्चिदनित्यं शब्दादीति विकल्पसमः। ननु तथापि कार्यत्वमैन्द्रियकत्वं वा साध्यमप्राप्य कथं साधयेदतिप्रसङ्गादिति प्राप्य वक्तव्यम्, तथा चाविशेषात् किं कस्य साध्यं साधनञ्चेति प्राप्तिसम इति षट् पक्षाः। एवमन्यत्रापि स्वयमूहनीया इति सूत्रार्थः। यद्यपि चैतत् सूत्रं षट्पक्षीसूत्रानन्तरमुचितं तथापि त्रिपक्ष्यादिसूचनार्थमर्द्धोक्त एवोक्तम्। उभया सुज्ञत्वप्रतिपत्तिफला हि षटपक्षी, तच्च फलं त्रि-चतुःपञ्चपक्षीष्वपि समानम्, तथापि किं चतुर्थादिपक्षावकाशदानेन तृतीय एवोभयोरसुज्ञत्वावधारणादिति चेत्, अत्र कश्चिदाह—मृदुमध्यातिमात्रप्रज्ञत्वान्निष्ठुरानिष्ठुरहृदयत्वाद्वा न द्रागित्येव

---

तत् किमिति। अत्र न केवलं तृतीयपक्ष एवेदृक् प्रत्यवस्थानमपि तु पक्षान्तरेऽपीत्यर्थे 'सर्वत्रैवमि'ति सूत्रस्यार्थमाहुः। तन्न, सजातीयासजातीयासदुत्तरसम्पिण्डनेन परत्वावश्यकत्वेनान्यलभ्यत्वात्। सदसदिति। कार्यत्वैन्द्रियकत्वे यथासंख्यं सदसती। यद्यपि चेति। अतिदेशस्यातिदेश्युपजीवकत्वादिति भावः। उभया सुज्ञत्वेति। तेन वादिप्रतिवाद्युभयार्थज्ञत्वप्रतिपत्तिफलकथाभासत्वं षट्पक्षीत्वम्। एतदेव प्रकरणार्थावच्छेदकं तद्विशेषास्त्रिपक्ष्यादयः। तथापीति। अवकाशदाने वा साध्यस्थस्यासुज्ञत्वप्रसङ्गः सप्तपक्ष्यादिप्रसङ्गश्चेति। मृदुमध्येति। अतिमात्रप्रज्ञास्तृतीयकक्षायामेवोभयासुज्ञत्वमुपलभन्ते, मृदुप्रज्ञास्तु षष्ठपक्षे, प्रचुरमार्दवाल्पोन्मेषप्रज्ञास्तु पञ्चमपक्षे, प्रचुरोन्मेषमन्दमार्दवप्रज्ञास्तु चतुर्थपक्षे इत्युभयासुज्ञत्वज्ञाने संवादविसंवादावुक्तौ, विलम्बाविलम्बावुक्तौ। संप्रत्यविलम्बितज्ञानानामपि च विलम्बाविलम्बाभ्यां कथाभासवैचित्र्यमाह—निष्ठुरेति। असत्यत्वेति। प्रज्ञाप्रकर्षवन्तो जयभङ्गाविलम्बावधारणार्थ-

---

1. NS. 5. 1. 40. 2. MS. 'उभयार्थलाञ्छलेति'।

सभ्या उभयोरसुज्ञत्वमुद्भावयन्तीत्यनियमादिति । तदशिष्यमसभ्यत्वप्रसङ्गात् । कथं तर्हि, अवसरापेक्षयेति ब्रूमः । तथा हि, सभ्यैस्तावत् पर्यनुयोज्योपेक्षणमेव मुख्यत उद्भाव्यमन्यत्तु नान्तरीयकतया । तच्च सत्साधनोपक्रमायां कथायां प्रथमद्वितीययोरसम्भावितमेव, तृतीये तु सम्भावितमपि नियुक्तैरुद्भाव्यं नियोगकालातिपाते त्वनियुक्तैरेवेति नियमः । त्रये च नियोक्तारः प्रतिवादिवाद्यनुविधेयाः, तत्र प्रतिवादिनियोगमपेक्षमाणाश्चतुर्थं पक्षमनुमन्यन्ते ; तस्मिन्नपि यत् किञ्चन वादिनि प्रतिवादिनि पर्यनुयोज्योपेक्षणमापतितमिति वादिनियोगमपेक्षमाणाः पञ्चमं पक्षमनुमन्यन्ते । वादिन्यपि प्रलपत्यनुविधेयप्रश्नावसरमुभयोः स्तम्भमपेक्षमाणाः षष्ठमपि पक्षं समीक्षन्ते । इत्येवं प्रश्नसमयातिक्रमे सभ्यैरनियुक्तैरपि वादिनौ निवार्य कुकथात्वमावेदनीयम् । अन्यथा, तेषामप्यवसरप्राप्तस्य पर्यनुयोज्यस्योपेक्षायामज्ञत्वप्रसङ्गात् । एतदुत्तरकालं हि सद्वादो नोपयुज्यते, प्राप्तोद्भावनावसरदोषोपेक्षणस्यासमाधेयत्वात् । कुतः पुनः सभ्यानां प्रश्नापेक्षेति चेत् , कथायास्तदकर्तृकतया तेषामुत्थाप्यविवक्षत्वात् । सा च प्रश्नेन वा उभयोरप्रतिभया वा कथाभासप्रबन्धेन वेति । तत्र प्रतिवादिप्रश्ने त्रिपक्षी । वादिप्रश्ने चतुःपक्षी । उभयोरप्रतिभायामनुविधेयप्रश्ने पञ्चपक्षी । कथाभासप्रबन्धे षट्पक्षी ।

---

मुपपत्तेः स्वव्यापारे निबन्धरोध एवेति भावः । तथा हीति । न हि स्वकौपीनं कश्चिद् विवृणोतीति न्यायेन पर्यनुयोज्योपेक्षणोद्भावने वादिप्रतिवादिनोरुभयोरप्यनवकाशात् सभ्या एवाधिकारिण इति तदेव तैरुद्भाव्यमन्यत्तु तत्सिद्ध्युपयोगेनेति तन्निहितमनसस्ते सत्साधनोपक्रमायां कथायां प्राप्यापि प्रतिवादिनं तदनुयोगमपेक्षन्ते, तस्याप्यसदुत्तरमासाद्य तदनुयोगाय वादिनमपेक्षन्ते, तस्याप्यसदुत्तरं श्रुत्वा सभापतिनियोगमपेक्षमाणाः षष्ठासदुत्तरमधिगम्य कथां विच्छेदयन्ति । एवञ्चासत्साधनोपक्रमायामुक्तन्यायेन षट्पक्ष्येवेत्यर्थः । ननु किमिति कथा विच्छेदनीया, यदि वादिनोः कश्चिद्विचार्य सदुत्तरमेव ब्रूते, तदेतत्प्रतीक्षणस्यापि न्याय्यत्वादित्यत आह--**एतदुत्तरेति** । ननु तृतीयकक्षायामेवोभयासुज्ञत्वे मध्यस्थेन निर्णीतेऽपि तदनुद्भावनेन तस्यासुज्ञत्वं सम्भाव्येतेति, किं प्रतीक्षयेति शङ्कते—**कुतः पुनरिति** । न्यायप्राप्तं प्रतीक्षणमावश्यकमिति परिहरति—**कथाया इति** । न च मध्यस्थस्य कथायामकर्तृकत्वे कथं तस्य निग्रहोद्भावनाधिकारः, कथं वा न तदुद्भावनस्य कथाबहिर्भाव इति वाच्यम् , समयबन्धविशेषेणोभयोपपत्तेः । ननु सभ्यानां कथोपक्रम एव भवद्भिरेवन्नियमितेऽपि निरुक्ता इति न तेषां पुनर्नियोगापेक्षा, अन्यथा सप्तमकक्षायामपि न वदेयुरनुयोगस्य तादवस्थ्यात् । अत्र वदन्ति—असमञ्जिज्ञासायां

वादे तु तृतीयपदे परेण निरनुयोज्यानुयोगोद्भावनं चतुर्थे स्वयमपि स्वदोषोद्भावनं तत्त्वबुभुत्सुत्वात् पञ्चमेऽपि तथा षष्ठस्य चाप्रतिभाप्रतीत्यर्थमवकाशः। यदा तु नानयोः परस्परसदुत्तरोद्भावनं, नापि स्वदोषं स्वयमुद्भाव्य सदुत्तरोपादानं, नाप्यप्रतिभा, तदा सभ्यावसरः। यदि तु चतुर्थादौ सदुत्तरं स्यात्, तदा वादे दुष्टपरिहाणे न कथा प्रवर्तत एव। अन्यत्र हेत्वन्तरहानिसंन्यासवदुत्तरान्तरप्रवृत्तेर्निग्रह एव। तस्याप्यनुद्भावने त्ववष्टम्भविजयमात्रम्, एकस्यातिशयेनापकृष्टत्वात् तदपेक्षया च द्वितीयस्योत्कृष्टत्वादिति संक्षेपः ॥ ४० ॥

चतुर्थं पक्षमाह—

**[1]प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः।**

प्रतिषेधविप्रतिषेधः प्रत्युत्तरं तृतीयः पक्ष इत्यर्थः। अत्रापि तुल्यो दोषः तज्जातीयो वा तन्नामको वा दोषरूपतयैव तुल्य इति वा पूर्ववन्नेयम् ॥ ४१ ॥

---

वाक्योपरमे वा मध्यस्थेन वक्तव्यमिति समयबन्धेन प्रवृत्तकथायां वादिप्रतिवाद्यनुविधेयानां जिज्ञासातो प्रवृत्तौ षष्ठपक्षानन्तरं वाद्यादेरभिधानिवृत्तौ मध्यस्थेन दोषोद्भावनेन कथापर्यवसानात् षडेव पक्षाः। अथ षष्ठपक्षे मध्यस्थोऽप्यज्ञानाद् वाक्यानुपरमाद्वा दोषं नोद्भावयति, तदा सप्तपक्षादावपि न विरोधः। षट्पक्ष्यनन्तरं लक्षणं मन्तव्यं सभ्यैरिति यदा समयबन्धस्तदा एव षट्पक्षी, अन्यथा सप्तपक्ष्यादिर्भवतीत्याहुः। यदोत्तरस्य जातित्वं स्थापनावाद्युद्भावयति, तदा द्विपक्ष्यपि कथा सम्भवतीति द्रष्टव्यम्। वादे त्विति। न च वादे सभ्या न सन्ति, वादिनोरेव तत्त्वबुभुत्सया वीतरागत्वादिति वाच्यं, दैवादागतानामप्रत्याख्याने तत्सम्भवात्। तथापि तत्र निग्रहस्थानोद्भावनं न तत्कर्तृकमिति वाच्यं, समयविशेषवशेन क्वचिदुपपत्तेः। यदि त्विति। दुष्टमुत्तरं विधाय सदुत्तरोपादानेनेति शेषः। अन्यत्रेति। विजिगीषुकथायाम्। हेत्वन्तरेति। प्रतिज्ञाहान्यादौ प्रतिज्ञापदस्य स्वीकृतमात्रोपलक्षणत्वाद्धेतुहान्यादिवदुत्तरहान्यादेरपि संग्रहादित्यर्थः। तदपेक्षयेति। एको हि जात्युत्तरं तावदभिहितवान्, परहेत्वन्तरादिकथापतितं न व्यज्ञासीत्। द्वितीयस्तदवगतवानित्यर्थः ॥ ४० ॥

तज्जातीययोरिति (?)। कार्यसमायां कार्यसमैव। तन्नामको वेति। यथोक्तमनैकान्तिकशब्दसाम्येन च्छलमित्यर्थः। दोषरूपतयेति। यस्य कस्याप्यसिद्ध्यादेरित्यर्थः ॥ ४१ ॥

---

1. NS. 5. 1. 41.

षट्पक्षीवैचित्र्यप्रतिपादनार्थं छलजाती विहाय निग्रहस्थानोद्भावने पञ्चमं पक्षमाह—

**[1]प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानदोषप्रसङ्गो मतानुज्ञा ।**

द्वितीयः पक्षः प्रतिषेधः, तस्य दोषं मदुक्तमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदुक्ते तृतीये पक्षे समानं दोषं प्रसञ्जयतो भवतो मतानुज्ञा निग्रहस्थानमापतितमिति पञ्चमः पक्षः ॥ ४२ ॥

सेयं मतानुज्ञा तवापि मदुक्तं दोषमनुद्धृत्य तृतीयपक्षे समानं दोषं प्रसञ्जयतो भूतेति षष्ठं पक्षं प्रतिवाद्याह—

**[2]स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ।**

वादिनः स्वपक्षः स्थापना, तल्लक्षणो द्वितीयः पक्षो जात्युत्तरं, तल्लक्ष्यीकृत्य प्रवृत्तेः । तस्यापेक्षा उपेक्षा अनुद्धार इति यावत् । ततः परपक्षेऽपि उपपत्त्युपसंहारः परापादितदोषोपसंहारः प्रतिषेधेऽपि समानदोष इति । इत्थमिति हेतुनिर्देशश्च तस्मिन्नुपपत्त्युपसंहारहेतुनिर्देशे तवापि समानो मतानुज्ञादोष इत्यर्थः ॥ ४३ ॥

इति श्रीमदुदयनाचार्यकृतौ प्रबोधसिद्धिनाम्नि न्यायपरिशिष्टे
पञ्चमस्य अध्यायस्य प्रथममाह्निकम् ।

---

उपसंहारस्वरूपमेवाह—तत्(?)प्रतिषेधेऽपीति । कथमित्यतः कथं निर्देशस्वरूपक्षम इत्थमि तथा भाष्यमित्थं चानैकान्तिकहेतुं निदर्शयतीति, तस्मिन्निति सप्तमी-व्याख्यानम् ॥ ४३ ॥

इति वर्धमानपरिशिष्टे प्रकाशे प्रथममाह्निकम् ॥

---

1. NS. 5. 1. 42.
2. NS. 5. 1. 43.

# न्यायपरिशिष्टम्

## द्वितीयम् आह्निकम्

अथ निग्रहस्थानविशेषलक्षणमाह्निकार्थः । तद्विभागार्थं सूत्रम्—[1]**प्रतिज्ञाहानि**रित्यादि **निग्रहस्थानानी**त्यन्तम् । कथायामखण्डिताहङ्कारेण परस्याहङ्कारखण्डनमिह पराजयो निग्रहः । स एतेष्वियत्स्वेवंनामकेष्वेव तिष्ठतीति

## परिशिष्टप्रकाशः

एकवाक्यताघटकमनुगतमाह्निकार्थमाह—**अथेति** । यद्यपि जातिच्छलयोरपि निरनुयोज्यानुयोगभेदत्वेन निग्रहस्थानविशेषत्वादतिव्यापकमेतत्, कयाचिद् विवक्षया तु तयोर्निग्रहस्थानात् पृथगुद्देशः प्रथमसूत्रे कृतः; तथापि निग्रहस्थानत्वसाक्षाद्व्याप्यविशेषलक्षणमाह्निकार्थः । छलादेस्तद्व्याप्यनिरनुयोज्यानुयोगत्वव्याप्यत्वेन न तथात्वम् । छलत्वाद्यतिरिक्तत्वेन वा विशेष्यम् । **तद्विभागार्थमिति** । जिज्ञासया हि विशेषलक्षणं वाच्यं सा च धर्मिण्युपस्थित एवेति विशिष्य तद्धर्म्युपस्थितिरनुसन्धेया, न सा विभागमन्तरेणेति भावः । **कथायामिति** । यद्यपि कथात्वं न शब्दत्वावान्तरजातिः, व्यञ्जकार्थभेदमप्रतीत्य तदप्रतीतेः, तत्प्रतीतौ च तदेव लक्षणमस्तु, अलं जात्या, उपाधयस्तु कथाभाससाधारणाः, तथापि षट्पक्ष्यन्यशाब्दानुभवप्रयोजकज्ञानाजनकविप्रतिपन्नबोधकवादिप्रतिवाद्यन्यतरकर्तृकप्रमाणोपन्यासः कथा । अतो न कथावयवे षट्पक्ष्याञ्चातिव्याप्तिः । अन्यच्च कथालक्षणं निग्रहस्थानसामान्यलक्षणञ्च प्रथमाध्यायनिबन्धप्रकाशे दर्शितमस्माभिः । निग्रहशब्दस्य राजधर्मोक्तदण्डादिविषयत्वं निवारयति—**पराजय इति** । पराजयो हि दुरोदराद्यनेकविषय इति कार्यद्वारेण विवेचयति—**अहङ्कारेति** । विभागोद्देश्यवाक्यार्थमाह—**स एतेष्विति** । ननु प्रतिज्ञाहानिवत् हेतुहानेरपि सम्भवात् प्रतिज्ञाविरोधवत् प्रतिज्ञोदाहरणविरोधस्यापि सम्भवाच्च कथमधिक-

1. Vide, NS. 5. 2. 1, प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ।

वाक्यार्थः । हेतुहान्युदाहरणविरोधादीनामेष्वेवान्तर्भावादवसरासङ्करेण सावकाशत्वाच्च । तथा च वक्ष्यामः । एकप्रयोजनानामप्यमीषां शिष्यहिततया व्यवहारोपयोगिप्रातिस्विकवैधर्म्यसूचनार्थमसमासः । स्वकार्ये परस्परनिरपेक्षत्वकथनार्थश्च । तच्च प्रतिलक्षणं वक्ष्यते । वस्त्वर्थः । तेनैतेषामेव कथाबाह्यानां कथायामप्यपस्मारोन्मादादिवशापन्नानां झटिति संवरणेन तिरोहितावसराणां पुरःस्फूर्त्तिकानधिकृतोद्भावितानां च व्यवच्छेदः । तथाविधानां तात्कालिकातत्त्वज्ञानलिङ्गत्वेऽपि प्रतियोगिव्यपेक्षया असुज्ञत्वलिङ्गत्वायोगात् । तद्धि निग्रहस्थानस्य स्वरूपमन्यथाऽतिप्रसङ्गादिति ॥ १ ॥

**[1]प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ।**

एतच्च यथाभाष्यं वार्त्तिकानभिमतं गौणत्वप्रसङ्गात् मुख्यासंग्रहाच्च ।

---

व्यवच्छेद इत्यत आह—हेतुहानीति । नन्वेवमेव हेतुहान्यादेरसम्भवः, अनैकान्तिकभयस्य तद्धेतुत्वे स एवोपजीव्यत्वान्निग्रहस्थानमस्तु, अलं तदुपजीविना हेतुहान्यादिनेत्यत आह—अवसरेति । उपजीव्यत्वेऽपि तस्य प्रतिज्ञाहान्या परिहृतत्वेन तद्दशायामुपजीवकस्यैव प्रतिज्ञाहान्यादेर्दोषत्वादित्यर्थः । नन्वमीषामुपाधीनां क्वचित् परस्परसाङ्कर्यात् कथमयं विभाग इत्यत आह—अवसरेति । तेन क्वचिदवसरेऽसाङ्कर्यात् क्वचित् साङ्कर्येऽपि न विरोधः । तथा च परस्परानाश्रयाश्रितोपाधिविभागोऽयम्, न तु परस्पराश्रयानाश्रितोपाधिविभाग इत्यन्ये । असमास इति । जातिविभागसूत्रे तु समपदानावृत्त्या सूत्रलाघवाय समास इति भावः । वस्त्वर्थ इति । न चानुक्तप्रत्यक्षाद्याभाससमुच्चयार्थश्चकार इति वाच्यम्, दृष्टान्ताद्याभाससंग्रहार्थमन्त्यसूत्रे चकारस्यैव दर्शितत्वेनात्रापि तदर्थाकल्पनात् । कथाबाह्यानामिति । स्वयमुपन्यासादौ, न च तत्रापि निग्रहस्थानमङ्गीक्रियत एवेति नातिव्याप्तिः । कथायामेव निग्रहाङ्गीकारात् । प्रतियोगीति । न चैकस्यां कथायामपरकथाप्रतियोग्यपेक्षयाऽपकर्षलिङ्गं जयिनोऽपि स्यादिति वाच्यम्, पर्यनुयोज्योपेक्षणलक्षणप्रस्तान्य-तदुदाहरणाभावात् ॥ १ ॥

तत्र प्रतिज्ञायाः प्राथमिकत्वादादौ प्रतिज्ञाहानिलक्षणम् । यथाभाष्यमिति । शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्येनानैकान्तिकीकृते यद्यैन्द्रियकं सामान्यं

---

1. NS. 5. 2. 2.

यथावार्त्तिकञ्चाव्यापकम्, पक्षहेतुदृष्टान्तदूषणहानेरसंग्रहात्। न च सा न निग्रहस्थानमविशेषात्। तत् कथमेतत्? उच्यते—उपलक्षकलक्षणपदव्याख्यानपरं भाष्यम्, उपलक्षकलक्ष्यपदव्याख्यानपरञ्च वार्त्तिकम्, मुख्यार्थद्वारमपहायोपलक्षकत्वायोगात्। किं पुनरत्रोपलक्ष्यते? प्रतिज्ञापदेन निर्वाह्यनिर्देशः। विवादे हि यद् यथा निर्दिश्यते तत्तथा निर्वाह्यते, तेन यो यथा साध्यत्वादिना निर्दिष्टस्तस्य तथा निर्वाहमपश्यतस्तत्परित्यागः प्रतिज्ञाहानिरिति सूत्रार्थः।

---

नित्यं कामं घटोऽपि नित्योऽस्त्विति वदन् प्रतिदृष्टान्तस्य सामान्यस्य नित्यत्वं स्वयमनित्यदृष्टान्तत्वेनोपन्यस्ते घटेऽनुजानानः प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। न चानित्यो घटोऽप्यैन्द्रियकोऽस्तीति पश्यतः कथं सामान्यनिष्ठनित्यत्वैन्द्रियकत्वमात्रप्रतिसन्धानात् प्रेक्षावतो घटनित्यत्वाभ्युपगमसम्भव इति वाच्यम्, सर्वथा प्रेक्षावतो निग्रहानुपपत्तेः। नापि प्रयोजनाभावादेतादृशाभ्युपगमासम्भवः। घटस्यापि नित्यताभ्युपगमे नित्यमात्रगतमैन्द्रियकत्वं न सपक्षसाधारणमित्यनैकान्तिकोद्धारप्रयोजनत्वादिति भाष्यकृतोक्तम्। तदेतद्वार्त्तिककृता दूषितम्। प्रतिज्ञा हि साध्यनिर्देशस्तस्य त्यागस्तदा स्याद् यद्यस्तु तर्हि नित्यः शब्द इति ब्रूयात्—न चैवम्; अतो दृष्टान्तहानौ प्रतिज्ञाहानिपदं गौणं स्यात्, तथा च मुख्यसाध्यत्यागाव्याप्तिरिति। तस्माद् दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः स्वकीयः पक्षः तस्य प्रतिदृष्टान्तभूतसामान्यधर्मनित्यत्वाभ्युपगमः। तर्हि शब्दोऽपि नित्योऽस्त्वेवंरूपा प्रतिज्ञाहानिरिति सूत्रं व्याख्यातं, तद् दूषयति—यथावार्त्तिकमिति। दूषणस्यापि हेतुविशेषत्वाद् गोवृषन्यायेन दूषणस्य पृथगुपन्यासः। अविशेषादिति। तस्याप्यपकर्षसूचकत्वादिति भावः। उपलक्षकेति। स्वीकृत्यास्वीकारः प्रतिज्ञाहानिः। तौ च स्वीकारास्वीकारौ पक्षसाध्यहेतुदृष्टान्ततद्विशेषणानां यथासम्भवमिह विवक्षितौ। अतः सूत्रलक्षणभागस्थौ प्रतिदृष्टान्तस्वदृष्टान्तशब्दावुपलक्षणार्थौ मुख्यार्थे चावगते तदनुसारेणोपलक्षणतया वर्णनं सुगमं भवतीति भाष्यकृता मुख्यार्थप्रदर्शनं कृतम्। सूत्रे च गौणत्वस्यानेकसंग्रहनिदानत्वेन श्लाघ्यत्वात् अजहत्स्वार्थलक्षणायां मुख्यार्थापरित्यागः। वार्त्तिकेऽपि प्रतिज्ञापदं स्वीकृतमात्रपरमित्युभयोरपि सामञ्जस्यादित्यर्थः। 'विवादे ही'त्याद्युक्तिसम्भवप्रदर्शनार्थम्। तेनेति। नन्वेतावता स्वीकृतोक्तपरित्यागः प्रतिज्ञाहानिरित्युक्तं भवति। तद् यद्यपि झटिति सम्भृतेनातिव्याप्तं निग्रहस्थानसामान्यलक्षणानुवृत्त्यैव तन्निरासात्, नापि केनचिद् रूपेणेष्टस्य रूपान्तरेण परित्यागेऽतिव्याप्तिः, त्यागस्य त्याज्याकाङ्क्षिणः स्वीकृतपदोपात्तस्वीकारनिरूपकस्यैव लाघवाद् द्रागवगमनेन स्वीकारत्यागयोरभिन्नप्रकारत्वप्रतीतेः। तथाप्यपसिद्धान्तेऽतिव्याप्तिः। न चोक्तपदेन तन्निरासः। नैयायिकोऽहमित्यनेन सकलशास्त्रार्थाभि-

एवञ्च लक्ष्यपदनिरुक्त्यैव लक्षणसिद्धौ द्वितीयप्रकारसूचनार्थं लक्षणारम्भः ; यदि दुष्टमेतन्मा भूदिति वा कण्ठतः अन्यथास्त्विति वा अर्थतोऽस्याः प्रवर्त्तनात्। तद्वार्त्तिकदिशा दृष्टान्तः पक्षः, स च यथोक्तनिर्देशमुपलक्षयति। भाष्यदिशा तु दृष्टान्तशब्द उक्तसंप्रतिपत्तिमुपलक्षयति, तद्विपरीतोपगमः प्रतिज्ञाहानिरिति सर्वं समञ्जसम्। तत्र साध्यधर्महानिर्वार्त्तिके। साधनधर्महानिस्तु अनित्यः शब्दः प्रमेयत्वादित्युक्ते अनैकान्तेन च दूषिते अस्तु तर्हि कृतकत्वादिति यथा। पक्षहानिस्तु, अनित्ये वाङ्मनसे कार्यत्वादित्युक्ते भागासिद्ध्या च प्रत्युक्ते अस्तु तर्हि वागेव तस्मादनित्येति यथा एतास्तिस्रो विशेषणद्वारापि द्रष्टव्याः। तद् यथा कुनैयायिकेन विवादाध्यासितं बुद्धिमत्कर्त्तृपूर्वकमिति पक्षिते बुद्धिमदिति विशेषणासामर्थ्ये च वर्णिते तर्हि कर्त्तृपूर्वकमित्येवास्त्विति साध्यविशेषणहानिः। विवादाध्यासितं क्षित्यादि कर्त्तृपूर्वकमिति प्रतिज्ञाते शङ्कराचार्यदिशा च दूषिते विवादाध्यासितमित्येवास्त्विति पक्षविशेषणहानिरिति। दृष्टान्तहानिस्तु, अनित्यः शब्दः प्रत्यक्षगुणत्वाद् द्व्यणुकवदित्युक्ते साधनविकलतया प्रत्युक्ते मा भूद् द्व्यणुकमुदाहरणं

---

धानात्। नापि येनैव प्रकारेणोक्तिस्तेनैव परित्यागो विवक्षितः। शब्दोऽनित्य इति प्रतिज्ञाय न किञ्चिदनित्यमस्तीति त्यजतस्तदभावप्रसङ्गात्। अत्राहुः—विशेष्योक्तस्वीकृतपरित्यागः प्रतिज्ञाहानिः। न च स्वीकृतत्यागस्यैवाशक्तिलिङ्गत्वेनोक्तपदवैयर्थ्यम्। तद्विलक्षणापसिद्धान्तस्य व्यावर्त्यत्वात्। नाप्यशक्तिलिङ्गत्वेऽशक्तिविशेषोन्नयनात्। न च परित्यागपदार्थान्तर्गत एव स्वीकार इति तद्वैयर्थ्यम्, वस्तुतः स्वीकारविरोधिविपर्ययस्य त्यागपदार्थत्वात्। न तु तेनैव रूपेण शक्तिपरित्यागश्च उक्तानङ्गीकारसूचक उक्तिविशेष इति न दुरधिगमः प्रकारद्वयावगमे द्वितीयत्वं सुगममतो विवेचयति—यदीति। अन्यथास्त्विति। ननु नेयं हानिः स्वरूपान्तराभ्युपगमे पूर्वपरित्यागानावश्यकत्वात्तथात्वे तु प्रतिज्ञान्तरमेव स्यान्न हानिः। तदुपजीवित्वेन जघन्यप्रतिपत्तिकत्वात्। मैवम्। 'अन्यथास्त्व'ति पूर्वोक्तं परित्यज्य न वा ? अन्त्ये अर्थान्तरम्। आद्ये त्याग एवोपजीव्य आवश्यकः। न चेह प्रतिज्ञान्तरलक्षणम्। अवशिष्टमुक्त्वा तत्रैव विशेषणान्तराप्रक्षेपादिति तात्पर्यात्। एता इति। यथा पक्षे साध्यहेतुहानात्तथा तत्तद्विशेषणहानादपीत्यर्थः। कुनैयायिकेनेति। कर्त्तुर्बुद्धिमत्त्वाव्यभिचाराद् बुद्धिमत्पदस्यावच्छेदकस्य विशेषणत्वानुपपत्त्या समासानुपपत्तिरिति भावः। शङ्कराचार्येति। एवं पक्षनिर्देशे क्षित्यादिपदवैयर्थ्यं तेनोक्तम्। उक्तेरसम्भवं प्रसिद्धप्रवादेन निरस्यति—

घटरूपं भविष्यति, न चोदाहरणमादरणीयमिति न्यायादिति यथा, यथा वा बौद्धस्य व्यतिरेकोदाहरणबलेन क्षणभङ्गसाधने प्रवृत्ते अप्रामाणिकत्वेन च दूषिते अस्तु तर्हि घट एवान्वयेनेति। दृष्टान्तगतत्वेन साध्यधर्महानिस्तु भाष्ये। साधनधर्महानिस्तु पूर्ववद् द्व्यणुक उदाहृते तथैव साधनविकलतया च दूषिते अस्तु तर्हि कार्यत्वहेत्वाधारतया इदमेवोदाहरणमिति यथा। अत्रापि विशेषणहानिरूहनीया। तद् यथा यत् कृतकं तदनित्यं दृष्टं यथा घटद्रव्यमित्युक्ते द्रव्यपदानर्थक्ये चोदाहृते अस्तु तर्हि घट इत्येवेति दृष्टान्तविशेषणहानिः। एवमन्त्या कारणसामग्रीत्यत्रापि अन्त्यपदानर्थक्ये यत् कार्यं तद् बुद्धिमत्कर्तृपूर्वकं यथा घट इत्युदाहृते पूर्ववच्च दूषिते तर्हि कर्तृपूर्वकमित्येवास्त्विति साध्यविशेषणहानिः। एवं पूर्ववत् साधनविशेषणहानिर्दृष्टान्ते। दूषणहानिस्तु निरनुयोज्यानुयोगोद्भावनानन्तरं दूषणान्तरपरिग्रहेण द्रष्टव्या। तद् यथा यदि नायमसिद्धः अस्तु तर्हि बाधित इत्यादि। एतासां च हानीनां सर्वत्र संव्यावहारिकत्वान्नोक्तेरसम्भवः। शास्त्रव्युत्पन्ना नैवमभिदधतीति चेत्, न; शास्त्रेऽप्येवंरूपव्यवहारदर्शनात्। प्रक्रान्तदोषपरिहारौपयिकत्वाच्च। निःसीमा च प्रतिभाक्षयेण किं कर्त्तव्यतामोहमहिमेति पूर्वनिग्रहप्रवृत्तावनवसरत्वात् अप्रवृत्तौ त्यागायोगान्नेदं निग्रहस्थानमिति चेत्, न; त्यागेनैव पूर्वस्य परिहारात्। न हि त्यक्तस्य दुष्टत्वे अस्य काचित् क्षतिरतिप्रसङ्गात्। ततः पूर्वनिग्रहव्यवस्थापनाय त्याग एवोद्भाव्यः। तथा हि, तदर्थ-

---

न चेति। पूर्ववदिति। प्रत्यक्षगुणत्वादिहेतुपुरस्कारेणेत्यर्थः। पूर्ववच्चेति। बुद्धिमत्पदाधिक्येनेत्यर्थः। एवमिति। यत् प्रयत्नकार्यं तदनित्यमिति प्रयत्नपदानर्थक्येऽवस्थितेऽस्तु तर्हि कार्यमित्येवेत्यर्थः। शास्त्रेष्वपीति। यदा व्युत्पादके शास्त्र एवंविधा व्याकुला वाचो दृश्यन्ते तदा ततो व्युत्पन्नानान्तदनुकारस्यावश्यक एवेति भावः। प्रयोजनाभावेनोक्त्यसम्भवमपाकरोति—प्रक्रान्तेति। नन्वप्रक्रान्तानैकान्तिकत्वपरिहारेऽपि प्रतिज्ञाहान्यापत्त्या वृश्चिकभियेत्यापतितमित्यत आह—निःसीमेति। यदुक्तं 'तथा च वक्ष्याम' इति तद्वक्तुं पीठमारचयति—पूर्वेति। हानिनिदानदोषोपनिपातप्रभवनिग्रहस्तस्य किं प्रतिज्ञाहान्यादिनिग्रहेणेत्यर्थः। पूर्वस्य दोषदुष्टत्वेऽपि तस्य परित्यागाद् दुष्टपरिग्रहस्य च निग्रहस्थानत्वात् कथं पूर्वदोषेण निग्राह्य इत्याह—त्यागेनैवेति। तथा हीति। त्यागस्यापि पूर्वोद्भावितदोषनिर्वाहकत्वे निर्वाह्य एव दोषोऽस्त्विति

मेवास्योपयोग इति चेत्, न; स्वयमप्यशक्तिसूचकत्वात् संन्यासवत्। तथापि विरोध एवास्यान्तर्भावः परिग्रहत्यागयोरेकत्रासम्भवादिति चेत्, न; त्याग-मनुद्भाव्य विरोधस्य व्यवस्थापयितुमशक्यत्वेन जघन्यत्वादिति। सेयं हानिः सदसद्विषया प्रत्युत्तरादिपातिनी तदुत्तरकक्षोद्भाव्या तत्रोपेक्षिता निग्रहहेतुः आपन्न-दोषपरिजिहीर्षाहेतुका। सद्धानौ पर्यनुयोज्योपेक्षणसहचारिणी। उद्भाविता चावष्टम्भविजयमावहतीत्यवश्यमुद्भाव्या। वादे तु सम्भाविताऽप्युपेक्षणीया, तदुद्भावनस्य तत्त्वज्ञानानङ्गत्वात्; सद्विषया तूद्भाव्यैव तदुद्भावनस्य तदङ्गत्वात्। उक्तं निर्वाहयेदिति रहस्यमत्रेति ॥ २ ॥

## [1]प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्।

---

भावः। स्वयमपीति। दोषान्तरपूर्वकत्वनैयत्ये[2]ऽपि हानेरवश्योद्भाव्यत्वात् स्वत एवा-शक्तिलिङ्गतया च दोषत्वादित्यर्थः। ननु प्रतिज्ञाहानिविरहेण दोषान्तरस्य क्लृप्तसामर्थ्य-त्वाद्धानेस्तु दोषान्तरविरहे क्वाप्यदर्शनेन निग्रहोन्नायकत्वमित्यत आह—संन्यासवदिति। सद्धानौ पूर्वोद्भावितदोषस्याभासत्वावश्यकत्वेन निग्रहानुन्नायकतया तस्या दृढत्वात् दृढतर-हानिरेवोपन्यासयोग्येति सापि क्लृप्तसामर्थ्यैवेति भावः। त्यागमिति। सर्वत्रोप-जीव्यस्य पृथग्दोषत्वादन्यथासिद्धिमात्रहेत्वाभासापत्तिरिति भावः। परिकरशुद्धिमाह— सेयमिति। सन्नपि स्वीकृतोऽर्थो दोषनिपातात् त्यज्यतेऽदुष्टोऽपीत्यर्थः। प्रत्युत्तरेति। न च प्रथमकक्षायामपि कस्यचित् सम्पूर्णमुक्त्वा किञ्चित् त्यजतः सा भवत्येवेति वाच्यम्, तूष्णीम्भावेऽप्रतिभायामन्तर्भावात्, सम्यग्वादे झटिति [3]संप्रवृत्तत्वेनादोषत्वात्। तदुत्तरेति। स्थापना तदुत्तरव्यतिरिक्ता कक्षा तदुत्पत्तिस्थानं यस्याञ्च कक्षायामुत्पद्यते तदुत्तरकक्षोद्भाव्या च सेत्यर्थः। अवश्योद्भाव्यतामाह—तत्रेति। उक्तिसम्भव-माह—आपन्नेति। सद्धानाविति। सद्धानिप्रयोजकदोषस्यावश्यमाभासत्वे न तदु-पेक्ष्य स्वीकृतं त्यजतोऽवश्यं पर्यनुयोज्योपेक्षणमिति भावः। अनुद्भावनदण्डमुक्त्वा उद्भावने गुणानाह—उद्भाविता चेति। एतेन जल्पवितण्डयोरेवेयमुद्भाव्येत्युक्तम्। अत एवाह—वादे त्विति। सद्विषयेति। अदोषं पक्षं भ्रमेण त्यजतो भ्रान्तेरवश्यं निवर्त्तनीयत्वादिति भावः। एतद्रूपासदुत्तरव्युत्पादनफलमाह—उक्तमिति ॥ २ ॥

---

1. NS. 5. 2. 3. 2. MS. '०नैत्यत्ये०'. 3. MS. '०वृत्ति०'.

प्रतिज्ञातार्थे दूषिते तत्प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनस्तद्वचनं प्रतिज्ञान्तरमिति सूत्रार्थः। तथा हि, 'धर्मविकल्पादि'ति विशेषणे हेतुमाह, तथा च तदुत्पथानिर्देशस्य दर्शिता ल्यब्लोपे पञ्चमी। धर्मविकल्पं प्रक्षिप्येत्यर्थः, तथापि प्रतिज्ञार्थोऽपि तत्र निर्दिश्यत इति कुतो लभ्यत इत्यत आह—**तदर्थे**ति। तस्यैवार्थस्य निर्देश इति वा, तदर्थं साध्यसिद्ध्यर्थं निर्देश इति वा, उभयथापि न कश्चिद्विशेषः। तदर्थं निर्देश इति तु वदता भाष्यकृता दोषपरिजिहीर्षास्य मूलमिति दर्शितम्। न हि तामन्तरेण स्वस्थो दूषिते विशेषणं प्रक्षेप्तुमर्हति अतिप्रसङ्गात्। कथं नित्या वर्णाः श्रावणत्वात् शब्दत्ववदित्युक्ते ध्वनिभिरनेकान्त इति च प्रत्युक्ते सध्वनय एव वर्णा नित्या इति पक्षविशेषणविधानैकान्तपरिहारात्। शब्दो नित्यः कार्यत्वादित्युक्ते भागे सिद्धसाधनमिति च प्रत्युक्ते वर्णात्मकः शब्दो नित्य इति पक्षविशेषणाधिकोक्तौ सिद्धसाधनतापरिहारात्। अग्निमदिदं सुरभिमलिनधूमवत्त्वादित्युक्ते असमर्थविशेषणतया च

---

प्रतिज्ञाहानिनिरूप्यत्वेन सङ्गतिः। उत्थानबीजमाह—**तत्प्रतिचिकीर्षयेति**। निगमनेनातिप्रसङ्गनिवारणार्थमुक्तम्—**विशेषणान्तरेति**। पूर्वानुक्तविशेषणप्रक्षेपेणेत्यर्थः। निग्रहस्थानसामान्यलक्षणेनैव तस्य निर्वर्त्तितत्वान्नेदमर्थवदित्यन्ये। ननु नेयं सूत्रे—बीजत्वेन श्रूयत इत्यत आह—**तथा हीति**। सूत्रे विकल्पो विशेषस्तस्य हेतुत्वान्वयः। परम्परया तद्धानस्य हेतुत्वात् धर्मशब्दो विषयविशेषपरः। तेनाभिलाषप्रयोजकज्ञानविषयत्वेन धर्मविशेषो लभ्यते। परम्परा हेतुपञ्चम्यामपरितुष्यन्नाह—**ल्यब्लोप इति**। **तथापीति**। विशेषणान्तरप्रक्षेपदशायामपि साध्यभागवचनमिति कुतो लभ्यत इत्यर्थः। **उभयथापीति**। साध्यसिद्ध्यर्थं निर्देश इत्यस्मिन्नपि विग्रहे धर्मिणं विधाय धर्मनिर्देशस्य कर्त्तुमसुकरत्वात् प्रतिज्ञायाः पुनर्वचनं लभ्यत इत्यर्थः। किञ्चास्मिन् विग्रहे प्रयोजनकथनेन दोषपरिजिहीर्षास्य मूलं दर्शिता भवतीत्याह—**तदर्थमिति**। **सध्वनय एवेति**। न च पक्षान्तरस्य न पूर्वपक्षविशेषणत्वं स्वातन्त्र्यादिति विशेषणान्तरप्रक्षेपेणेत्यनेन विरोध इति वाच्यम्, विशेषणपदस्य सम्बन्धिमात्रपरत्वात्। यद्यपि ध्वन्यनित्यत्ववादिनो नित्यत्वसाधनेऽपसिद्धान्तः, ध्वनिनित्यत्ववादिनस्तत्रानैकान्तिकत्वाभावेन पर्यनुयोज्योपेक्षणं, तथापि शास्त्रार्थमभ्युपगम्य तद्विरोधेनापसिद्धान्तो यत्र तु शास्त्रमतिपत्य स्वयमेव ध्वनेर्नित्यत्वमभ्युपगम्यते तत्र प्रतिज्ञान्तरोदाहरणमेतत्। **पक्षविशेषणेति**। पूर्वं धर्मान्तरोपादानं न पूर्वसाध्यविशेषणेन च साध्यमादायापरं प्रकारद्वयमाह—**अग्नि-**

प्रत्युक्ते साग्निकृत् क्षरारुमदिति साध्यान्तराधिकोक्तौ विशेषणासामर्थ्यपरिहारात् । विवादाध्यासितं बुद्धिमत्पूर्वकमित्युक्ते सिद्धसाध्यतया च प्रत्युक्ताभासे उपादानाद्यभिज्ञापूर्वकमिति साध्यविशेषणाधिकोक्तौ सिद्धसाधनतापरिहारात् । तदेतत् पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपेण चतुर्विधं दूषणान्तरपरिहारार्थमपि प्रवर्त्तते अवान्तरभेदाच्चानन्त्यम् । इदन्तु चिन्त्यते, अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते सामान्येन व्यभिचाराच्च प्रत्युक्ते सामान्यमैन्द्रियकं सर्वगतं शब्दस्त्वनित्योऽसर्वगत इति साध्यान्तरप्रक्षेपः किमर्थः ? न ह्यनेनानैकान्तिकत्वमापादितमपास्यते, न असर्वगतत्वं प्रसाध्य हेतुं विशिष्य तत् परिहरिष्यामीति मनोरथेन प्रवृत्त्युपपत्तेः । तर्हि तत्सिद्धये हेतुमपि कश्चिद् ब्रूयात् सभाक्षोभेण स्तम्भितत्वादवचने वा न्यूनं स्यादिति चेत्, न ; पूर्वोपक्रान्तस्य हेत्वादेर्विद्यमानत्वेन न्यूनत्वानवकाशात् । तथा हि, पूर्व एव निग्रहोऽनुवर्त्तते, अपरिहृतत्वात् । न च निगृहीतो निग्रहमर्हत्यतिप्रसङ्गादिति चेत्, न ; अनुद्भावने किमयं परिहृतमनेनेति मत्वा अप्रतिभया तूष्णी-

---

मदिति । अत्र कृष्णागुरुप्रभवाग्निमदिति प्रतिज्ञानिर्देशो यदि न क्रियते, तदा साध्यविशेषणोक्तिरूपान्न विशेषः स्यादतः स्वातन्त्र्येण साग्नित्वं कृष्णागुरुमत्त्वञ्च द्वयं साध्यमिति दर्शयितुं साग्नीति प्रथममुपात्तम् । ननु यदि कृष्णागुरुमत्त्वाङ्केऽपि विप्रतिपत्तिस्तदा परेण दोषोद्भावनानन्तरं स्थापनाकरणादप्राप्तकालत्वम् ; अथ न तत्र विप्रतिपत्तिस्तदार्थान्तरमधिकं वा ? मैवम् । पूर्वमविप्रतिपत्तावपि व्यर्थविशेषणत्वपरिहारार्थं तदुपन्यासेनाधिकाद्यभावात् । प्रयुक्ताभास इति । अदृष्टद्वाराऽस्मदादिकृतिसाध्यत्वेऽपि क्षित्यादीनां नास्मदादिकर्तृत्वम् । भोक्त्रस्मदाद्यदृष्टजनितघटादीनामस्मदाद्यकर्तृत्वादिति तद्विलक्षणादृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरकृतिसाध्यत्वमित्याभासत्वमिति । तदेतदित्युपलक्षणम् । उदाहरणैकदेशतद्विशेषणनिगमन-तद्विशेषणभेदादपरं चतुष्कं द्रष्टव्यम् । भाष्योदाहरणं समाधास्यन्नाह—इदं त्विति । न हि तद्दोषपरिजिहीर्षोः तद्दोषपरिहारानुपाये प्रवृत्तिर्युज्यत इति भावः । साक्षात्तदनुपायत्वेऽपि परम्परा तदुपायत्वमस्त्येवेत्याह—असर्वेति । तर्हीति । न ह्यसिद्धमुपायः सिद्धिश्च हेत्वधीनेति भावः । न्यूनमिति । सभाक्षोभात् प्रतिज्ञामात्रमभिधाय विरतस्येत्यर्थः । नन्वस्य तत्रावकाशो यत्र हेत्वधिकमन्वययोग्यं प्रक्रान्तं नास्तीत्याह—पूर्वेति । ननु स्थापनावादिनो मनसि पूर्वनिग्रहं परिहरिष्यामीति विवर्त्तते, न तु परिहृतमिति ; तथा च तन्मतेऽपि पूर्वनिग्रहस्तदवस्थ एवेति किं निग्रह स्थानान्तरेणेति शङ्कते । तथा हीति । सत्यं तूष्णीम्भाव एव उचितः कुतश्चिन्नु प्रयोजनादतूष्णीङ्कत्वमिति परिहरति—अनुद्भावन इति । अयं दूषणवादी । अनेन

मास्ते किं वा पूर्वदूषणानास्कन्दनात् किमत्र वक्तव्यमिति मत्वेति परिषत्-सन्देहानिवृत्तावुत्कृष्टानुत्कृष्टव्यवस्थानुपपत्तिप्रसङ्गादिति। तथापि पूर्वकमेव दूषणमुद्भावयेदिति चेत्, न; एवं हि प्रतिवदेत् यत् पूर्वप्रतिज्ञायामैन्द्रियकत्वमनैकान्तिकमेवेति। यद्वा, एतस्मिन्नपि प्रतिज्ञार्थे तदनैकान्तिकमेवेति। यद्वानेन साध्यान्तरोपक्षेपेण तत् परिहृतमिति। सर्वथार्थतः कण्ठतो वा न प्रतिज्ञान्तरमनुद्भाव्य ख्यातुं शक्नुयात्। न चेदमर्थान्तरं प्रक्रान्तोपयोगात्। अथ हेत्वन्तरं कुतः पृथगस्मात् क्रियते हेतुहानिवद्धि तदप्युपलक्ष्येत। अन्यथोदाहरणान्तरमपि लक्षणीयं स्यात्। तद् यथा, अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् यदस्मदादिबाह्यकरणग्राह्यं तदनित्यं दृष्टं यथा घट इत्युक्ते प्रयोजकांशन्यूनतया च प्रत्युक्ते सामान्यविशेषवत्त्वे सतीदमुच्यत इति। एवं तथा चायमस्मदादिबाह्यकरणप्रत्यक्ष इत्युपनये न्यूनतया प्रत्युक्ते तथैव विशेषणोपादाने उपनयान्तरम्। एवमेव बहलप्रतिज्ञैकदेशोपसंहारे तथैव प्रत्युक्ते पुनः समस्तोक्तौ निगमनान्तरमिति। सत्यम्, साध्यसाधकभागभेदविवक्षया तु भेदोपन्यासः, वाक्यप्रयोगस्योभयशरीरत्वात्। तत्र प्रतिज्ञान्तरं प्रयोज्यान्तरं निगमनान्तरमिति प्रतिज्ञान्तरप्रपञ्चः। हेत्वन्तरं प्रयोजकान्तरमुपनयान्तरं दूषणान्तरमिति हेत्वन्तरप्रपञ्च इति। एतस्यापि परिकरशुद्धिः प्रतिज्ञा-

---

स्थापनावादिना। प्रथमे प्रतिवचन इत्यर्थः। परयोः कश्चिदिति। न चेदमिति। असर्वगतत्वं प्रसाध्यते, न हेतोर्विशेषणादनैकान्तिकत्वपरिहारबुद्ध्या प्रक्रान्तोपक्रम इत्यर्थः। एतच्चोपलक्षणम्। नाप्यपार्थकम्, अनित्यः शब्दोऽसर्वगतश्चेत्युभयधर्मवैशिष्ट्यस्योभाभ्यां प्रतिपादनेन निश्चितान्वयत्वादित्यपि द्रष्टव्यम्। ननु हेतुप्रतिज्ञयोर्भेदात् कथं प्रतिज्ञान्तर उक्ते हेत्वन्तरलाभ इत्यत आह—हेतुहानिवदिति। प्रतिज्ञाहानिमुक्त्वा हेतुहानिर्नोक्तेति यथा तन्निर्वाह्यहानिपरतया सर्वसंग्रहः। तत्रापि निर्वाह्यान्तरतया सर्वसंग्रह इत्यर्थः। अथ प्रत्यवयवमवयवान्तरलक्षणं पृथगमिधित्सितं, तत्राह—अन्यथेति। ननु प्रतिज्ञाहानिरपि न सर्वसाधारणी स्यादिति साधकभागहानिलक्षणं पृथक्कर्त्तव्यमित्यत आह—वाक्यप्रयोगस्येति। हानौ साध्यसाधकभागावस्थायां न पूर्ववाक्यस्यान्यादृशार्थपरता, किन्तु पूर्ववाक्योपमर्दनमात्रमत एव संन्यासेऽपि न भेदविवक्षेति भावः। प्रयोज्यान्तरमिति। उदाहरणवाक्यस्थसाध्यभागान्तरं यथा यो यः सुरभिमलिनधूमः सोऽग्निमानित्यर्थः। परिकरेति। सदसद्विषयत्वादिरूपेत्यर्थः। तत्राविशिष्टं स्वरूपं वेति,

हानिवद् द्रष्टव्येति । इदन्तु चिन्तनीयं, कथमेतत् प्रतिज्ञाहानितो भिद्यते, यावतात्रापि विशिष्टोपादानादविशिष्टहानिरेव ? न, स्वरूपस्यापरित्यागात् । पश्चादुपादीयमानविशेषणाभावस्य च प्रागप्यनुपादानात् । न च स्वरूपविशेषणाभावाभ्यामन्योऽविशिष्टो नाम यस्य त्यागाद्धानिः स्यात् । अत्र कक्षान्तरेण विशेषयेदिति रहस्यम् ॥ ३ ॥

## [1]प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ।

अत्र 'प्रतिज्ञाहेत्वो'रिति वाक्यगतप्रतियोगिद्वयोपलक्षणपरं विरोधस्योभयनिष्ठत्वात्

---

एतदेव पश्चादुपादीयमानविशेषणाभावविशिष्टं वा तदुभयव्यतिरिक्तं वा ? आद्यं दूषयति—स्वरूपस्येति । न हि विशेषणोपादाने स्वरूपं त्यज्यते, किन्तु तदेव विशिष्टमुच्यत इत्यर्थः । अथ विशिष्टोपादाने केवलत्याग एव, तर्हि कैवल्यं पश्चादुपादीयमानविशेषणाभाव एवेति द्वितीयपक्षप्रवेश एवेति भावः । द्वितीयं दूषयति—पश्चादिति । अन्त्यं निराकरोति—न चेति । यत्तु खण्डितं परोक्तदोषोद्धाराय पूर्वानुक्तविशेषणवतः पूर्वोक्तस्य साधनायामस्य प्रतिपादनं प्रतिज्ञान्तरमिति पर्यवसितं लक्षणम् । तत्र कथाप्राक्कालानुक्तविशेषणवतः कथारम्भेऽभिहितस्य परेण निर्विशेषणभ्रमाद् दूषितस्य नेदमविशिष्टं मयोक्तं येन त्वद्दूषणं सङ्गच्छते, किन्तु विशिष्टमतो निरनुयोज्यानुयोगो भवत इति सदुत्तरेऽतिव्याप्तिः । न च विशेष्याभिधानकालानुक्तविशेषणवतोऽभिधानं तथा कथाप्राक्कालन्तु(?) न विशिष्याभिधानकाल इति वाच्यम् । वाचां क्रमभावितया विशेषणविशेष्याभिधानयोरेककालत्वासम्भवात् तदव्यवहितोत्तरकाले इत्यस्यापि पूर्वनिपातिविशेषणतदव्यवहितकाल इत्यस्य बहुविशेषणाव्यापनात् विशेषणाभिधानकाल इत्यप्ययुक्तम्, नानाविशेषणके विशेष्ये सर्वविशेषणाभिधानकालानां सर्वविशेषणसाधारणत्वादिति । तन्न । विशेष्यसमभिव्याहारौपयिककाले विशेषणाभिधानं प्राग् विशेषणस्यावचनं ततश्च विशेष्यावबोधकवाक्यजनितविशेषणधीकालस्य पूर्वकालत्वमत्र विवक्षितमित्यन्यथा परिकल्प्य दूषणाभिधाने च्छलापातात् । न च दूषणपूर्वकालस्य तथाभिमतावपि दूषणान्तरविशेषणोक्तिव्यक्तेस्तदानीमभावादतिव्याप्तिः, तदानीं विशेषणोक्तिमत्त्वात्यन्ताभावस्य विवक्षितत्वादिति । ननु मिथो विरोधमात्रस्य निग्रहान्तरत्वे विभागव्याघातोऽनेन तदव्यापनादित्यत आह—अत्रेति । अत्र विरोधपदात् प्रतियोगिद्वयोपस्थितेरावश्यकत्वात्तावदेवाकाङ्क्षितत्वादन्वेतीत्यर्थः ॥ ३ ॥

---

1. NS. 5. 2. 4.

लक्ष्यगतप्रतिज्ञापदमप्युक्तमात्रपरम्। एकपदोत्कीर्त्तनञ्च तदंशविरोधसूचनेनावयवान्तरोपलक्षणभ्रमं वारयति। तेनैकस्मिन् वाक्ये तदंशयोरवान्तरवाक्ययोः पदयोर्वा मिथो व्याघात उक्तः विरोध इति सूत्रार्थः। एकवक्तृकवाक्यविषयत्वान्नापसिद्धान्तसङ्करः, विपरीतव्याप्त्युपदर्शनप्रयासाभावान्न क्वचिद्विरुद्धहेत्वाभाससङ्करः। यद्यपि च विरोधे अवश्यं हेत्वाभासानुप्रवेशः, तथापि तस्य जघन्यप्रतीतित्वात्तमुपेक्ष्य

---

तथाप्यवयवान्तरविरोधिनः प्रतिज्ञाविरोधेति संज्ञा विरुद्धेत्यत आह—लक्ष्येति। स्वायत्ते शब्दप्रयोगे लाक्षणिकपदोपादानप्रयोजनमाह—एकपदेति। लक्षणगतमेकं पदं प्रतिज्ञेति तदुत्कीर्त्तनं तदङ्गयोः प्रतिज्ञाभागयोः श्रमणागर्भिणीत्यादौ च विरोधसूचनेन लक्षणगतप्रतिज्ञाहेतुशब्दस्यावयवान्तरोपलक्षणत्वेनावयवयोरेव विरोधः प्रतिज्ञाविरोध इति भ्रमं निराकर्त्तुमित्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह—तेनेति। ननु मिथो व्याघातः कथं विषयाप्रसिद्ध्या निरूप्यः कीदृशो वा विरोधः? न तावद्भावाभावरूपत्वं श्रमणागर्भिणीत्यादावव्याप्तेः। नापि सहानवस्थायित्वम्, गवाश्वादावतिव्याप्तेः। इदमसाधकमनुपलभ्यमानोपाधिशङ्काग्रस्तत्वादित्यव्याप्तेश्च। नापि वध्यघातकत्वमसम्भवात्। नापि परस्पराभावव्याप्यत्वम्, विरुद्धस्यैतद्विशेषत्वापत्तेः। सहानवस्थायिनोरेकधर्मिनिरूप्यत्वं चाप्रसिद्धमेवेति। अत्राहुः—यस्य हि येन रूपेण यदन्वयो येन नाभ्युपगतस्तस्य तेन रूपेण तदन्वयाभ्युपगमे विरोधः। स च पदादिभिरुन्नीयत इति पदादेस्तथा प्रतिपादकाद् व्याघात उच्यते। न च यावज्जीवमहं मौनी ज्ञानमविषयमवाचकः शब्द इत्यादिषु विरोधप्रतिभेदेषु अनभ्युपगमानन्तरं येन व्याघातः स्यादित्यव्यापकत्वं, मौनं हि वचनोच्चारणशक्तस्य तदनुच्चारणं तत्राह—मौनीति शब्दोच्चारयितृत्वमात्मनोऽभ्युपगच्छति चेत्, व्यक्तमभ्युपगमान्तरं, न चेन्न तर्हि प्रतिपादक इति स्वयमेवाप्रतिभास्वीकारात्। एवमवाचकः शब्द इत्याद्यप्यूहनीयम्। यद्वा, यद् यथा स्वीकृतं तत्तथात्वव्यतिरेकनियतो व्यापारो विरोधः। तथा च स्वक्रियाव्याघातादिसंग्रहः। यत्तु खण्डितं घटोऽस्तीत्यंशस्य घटसत्त्वबोधके न घटतदभावविरुद्धप्रतिपादके इह घटो नास्तीत्यत्रातिव्याप्तिरिति। तन्न। अस्तिना घटानन्वयात्। नास्तीत्यनेन तु घटोऽन्वीयते। अप्रामाणिकाभिमानं विरोध इत्यन्ये। एकवक्तृकेति। नन्वपसिद्धान्तेऽपि नैयायिकोऽहमित्यभ्युपगमवाक्येनैकवक्तृकवाक्यविषय एव विरोधः न शास्त्रकाराभ्युपगमविरोधमप्रतीत्य स्वाभ्युपगमविरोधस्य प्रत्येतुमशक्यतया उपजीव्यत्वेनापसिद्धान्तस्यैव दोषत्वात्। ननु विरुद्धे बाधे च हेत्वाभासेऽवश्यं विरोधस्तत्र चावश्यं विपरीतव्याप्तिस्तदुपदर्शनं चेत्यतिव्याप्तमित्यत आह—यद्यपीति। संप्रत्ययो झटिति प्रत्ययः। हेत्वाभासो हि वस्तुगतिमनुरुध्येतेत्यभ्युपगममात्रम्। अत एव तद्विपरीतव्याप्त्यसिद्धौ सा साध्यते। तदसाधने निरनु-

विरोध एवोद्भाव्यः, सांप्रत्यायकत्वेनोपेक्षानर्हत्वात् । स च बहुप्रकारप्रतिज्ञापदयोः प्रतिज्ञाहेत्वोः प्रतिज्ञोदाहरणयोः प्रतिज्ञोपनययोर्मन्दः, हेतुविरोधाविरोधाभ्यामनवकाशात् । प्रतिज्ञानिगमनयोर्हेतुस्वपदयोर्हेतुदृष्टान्तयोर्हेतूपनययोः दृष्टान्तस्वपदयोः प्रतिज्ञातर्कयोः एवं दूषणवाक्येऽपि स एव प्रपञ्चः । साध्यधर्मिनिषेधाद्वा, यथा नास्त्यात्मेति । धर्मनिषेधाद्वा, यथेश्वरो न कर्त्तेति । धर्मिविधेर्वा, यथा अतीतमस्तीति । धर्मविधेर्वा, यथा परमाणवः सावयवा इति । स्वरूपतो वा, यथा हेतुव्यापारात् प्रागपि सत्कार्यं कार्यत्वादिति । विशेषणद्वारा वा, यथा मध्येऽप्यसत्कार्यम् आद्यन्तयोरसत्त्वादिति । एवंविधानाञ्च परमतप्रतिषेधाभिप्रायदुरवलेपाद्वा दृष्टान्ताभासलाभतरलतया वा प्रमादाद्वा सभाक्षोभाद्वा उक्तिसम्भवः । सोऽयं प्रथमकक्षादिपाती उत्तरकक्षोद्भाव्यो वादेऽपि । अन्यथा तत्त्वप्रतिपत्तिव्याघातात् । शेषं पूर्ववत् । मिथो व्याहतं न वदेदिति रहस्यम् ॥ ४ ॥

**[1]पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः ।**

अत्रापि प्रतिज्ञापदमुक्तमात्रोपलक्षणपरं तथा पक्षशब्दोऽपि । अपनयनमपलापः । तेनोक्तापलाप उक्तसंन्यास इत्यर्थः । न च स्वस्थोऽकस्मादेवोक्तमपलपतीत्यत

योज्यानुयोगो, विरोधस्तु तेन रूपेणाभ्युपगममात्रमादाय प्रवर्त्तते, न तु वस्तुगतिमनुविदधाति । यद्यपि विरोधेऽपि क्वचिद्व्याप्तिरस्त्येव, तथापि न तामुपजीव्य तत्प्रवृत्तिरिति भावः । विरुद्धबाधादीनां विरोधव्याप्यत्वेऽपि हेतोरन्यत्र विरोधासङ्कर इत्यन्ये । **हेतुविरोधेति** । हेतुनैव प्रथमभाविना प्रतिज्ञाया विरोधे तदुद्भावनस्य जघन्यत्वादित्यर्थः । एवञ्च विरोधे यद्यप्यवश्यमनैकान्तिकादयस्तथापि तत्प्रतीत्युद्भावनयोरेतत्प्रतीत्युद्भावनोपजीवकत्वेन जघन्यत्वादस्य च प्राथमिकत्वादयमेव प्रथमोद्भाव्य इति भावः । **धर्मिविधेरिति** । न चात्राव्यतीते धर्मिण्यस्तित्वं विधीयत इति धर्मविधिरेवायमिति वाच्यम्, धर्मी विशेष्योऽतीतरूपस्तस्य विधिस्तावत् कालसम्बन्धविधानमेवेत्यर्थात्, सामान्यविशेषन्यायाद्वा । **शेषमिति** । सद्विषयत्वादिकमुपेक्षया निग्रहायेत्यादिकञ्चेति ॥ ४ ॥

पूर्ववत् सङ्गतिः, पक्षप्रतिज्ञापदाभ्यां निर्वाह्योपस्थितेरावश्यकत्वादाकाङ्क्षितत्वाच्च तेनैवान्वय इत्याशयेनाह—**अत्रापीति** । **तेनेति** । यो येन रूपेण प्रतिपादितस्तस्य तेन रूपेणाप-

1. NS. 5. 2. 5.

उक्तं पक्षप्रतिषेधे परेण कृते सति। तेन तत्परिहारार्थमिति तात्पर्यम्। उक्तदूषणे ह्यस्फूर्त्तिदशायां कश्चिदुक्तं त्यजेदेव, कश्चिद्विशेषयेत्, कश्चिदपलपेदिति त्रिधा प्रत्यवस्थानसम्भवः। तेन वत्सोऽपि हि द्रव्यत्यागेन वा निवृत्तिमिच्छेत्, स्वीयतया वा स्वीयताभ्रमेण वा विशेषयेदपलपेदेव वेति नालौकिकोऽयं प्रकारः। न चातिप्रसङ्गः अपह्नवनिर्वाहेण दूषणपरिहारवत् कपोलवादित्रादिना तदसिद्धेः चोरवदेव। न च पूर्वनिग्रहेणैव गते किमनेनेति वाच्यम्, तस्यापह्नवेनापास्तत्वात्। तस्यापह्नवमनुद्भाव्य व्यवस्थापयितुमशक्यत्वात्। न चैवं तादर्थ्यमेवास्य, स्वयमेवापकृष्टत्वसूचकत्वादिति। सोऽयं चतुःप्रकारः क एवमाहेति वा परपक्षोऽयं मयोक्त

---

लाप इत्यर्थः। अत एव त्वयेदमुक्तमित्यत्राव्याप्तिरनुवादातिव्याप्तिस्तत्राप्युक्तापलापस्य उक्तव्यतिरेकरूपस्य सत्त्वादिति निरस्तम्। उक्तविषयारोपेण उक्तदोषपरिहाराभिधानं प्रतिज्ञासंन्यासः। छले च नोक्तविषय आरोपः, किन्तु तात्पर्यादावित्यन्ये। अर्थान्तरं निराकरोति—**तत्परिहारार्थमिति**। उक्तिसम्भवमाह—**उक्तदूषणे हीति**। ननु परोक्त असाधकत्वासाधने सन्न्यासे कश्चिद् दोष उच्यते न वा? आद्ये, तस्य सामर्थ्ये असामर्थ्ये वा। यथायथं दोषान्तरस्यैव सम्भवो निर्दोषत्वं वा? अन्त्ये, अर्थान्तरत्वम्। एवं हान्यादावपि। मैवम्। अपलापेन साधकतासाधनस्य स्वानभ्युपगतविषयत्वकथनेन सिद्धसाधनार्थान्तरयोरन्यतरप्रदर्शनाद् दोषान्तरेऽपि चापलापस्य उपजीव्यत्वेनास्य व्यतिरेकात् सद्धेतावेव परेणानैकान्तिकादावुक्ते तेन सहापलापस्य तत्रैवासङ्करात् अर्थान्तरादेस्तूपजीव्यतयैवातिरेकादस्याप्यशक्तिसूचकत्वात्। 'रत्नकोष'कृतस्तु कथासमयबन्धकालाभ्युपगतस्यार्थस्यापलापेऽसङ्कर आकरे तु संकीर्णस्यैवोदाहरणमित्यूचिरे। तथापि सन्न्यासमपि सन्न्यासान्तरेण परिहर्त्तुः किमुत्तरम्? सन्न्यासान्तरमेवेति गृहाण। अनवस्थाप्रसङ्गस्तुल्य एव। नन्वनुन्मत्तस्योक्तापलापः सम्भवी कश्चिदस्फूर्त्तिमांस्तथा कुर्वन्नपि वा कथं निगृह्यताम्, अन्यथा कपोलवादित्रादेरपि कदाचित्तादृशेन करणात्तदपि निग्रहोन्नायकेषु गण्येतेति 'कीर्त्ति'नोक्तमतिप्रसङ्गं निवारयति—**न चेति**। ननु पूर्वदूषणाप्रवृत्तावस्यासम्भवात्तत्प्रवृत्तौ च तेनैव निग्रहान्नेदं निग्रहस्थानमित्याशङ्क्य निराकरोति **न चेति**। अपह्नवाव्यवस्थापने पूर्वदूषणस्य गतार्थत्वादित्यर्थः। **न चैवमिति**। अन्यथासिद्ध्यादेरनैकान्तिकाद्यपि पृथङ् न स्यादिति भावः। **सोऽयमिति**। न चानुक्त एव मयेदमुक्तमिति पञ्चमोऽपि प्रकारः शङ्कनीयः। प्रतिपादनापलापवत्त्वे प्रथमपक्ष एवान्तर्भावात् अन्यथा त्वर्थान्तरावेव (?)। न चानेन रूपेण सर्वेषामेव तत्रान्तर्भावप्रसङ्गः, सामान्यविशेषन्यायेनान्यस्योक्तान्यपरत्वात्। **परपक्षोऽयमिति**। यथा शब्दो नित्यः

इति वा, स्वोक्त एव त्वयेदमुक्तमिति वा, परोक्तमेव मयेदमुक्तमिति वा। वादासम्भवी चायम्, तत्त्वबुभुत्सुतया स्खलितसंगूहनाभावात्। अबुद्धिपूर्वकमत्रापीत्येके। शेषमशेषं हानिवत्। अनुवादप्रोज्ज्वलं दूषणोपारूढं नापलपेदिति रहस्यम् ॥ ५ ॥

[1]अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्।

अत्र हेतुपदेन वाक्यगतसाधकभागमुपलक्षयति। इच्छया वचनं तेन प्रथममविशिष्टं साधनभागमभिधाय पुनर्विशेषणवत्तद्वचनं हेत्वन्तरमित्यर्थः। न च स्वस्थस्यैतदकस्मात् सम्भवतीत्यत उक्तं प्रतिषिद्ध इति। तेन प्रतिषेधोद्दिधीर्षयेति तात्पर्यम्। तदिदं हेतुविशेषणादुदाहरणप्रयोजकांशविशेषणादुपनयविशेषणाद् दूषणविशेषणाच्चेति चतुर्विधम्। तत्र प्रथमं यथाभाष्यम्—तदुत्तरद्वयं प्रतिज्ञान्त उदाहृतम्। चतुर्थन्तु हेतौ प्रयुक्तेऽसाधकोऽयं सपक्षे सत्त्वादनित्यत्वे प्रमेयत्ववदिति प्रत्युक्ते जात्युत्तरेण। जात्युत्तरतया च परिहृते विपक्षगतत्वे सति सपक्षे सत्त्वादिति

---

कृतकत्वादिति श्लिष्टप्रयोगानन्तरं विरुद्धत्वे परेणोद्भाविते अकारोऽत्र प्रश्लिष्टो मयोक्तोऽतो निरनुयोज्यानुयोगो भवत इति। चतुर्विधोऽप्ययं विशेषणादिसंग्रहाद्बहुप्रकारः। शेषमिति। सदादिविषयप्रत्युत्तरकक्षापातित्वादित्यर्थः ॥ ५ ॥

हेतुसन्न्यासस्यापि पूर्वत्रोपलक्ष्यत्वादस्य च हेतुनिरूप्यत्वात् सङ्गतिः। यथाश्रुतस्योपनयाद्यन्तराव्यापकत्वादाह—अत्रेति। अजहत्स्वार्थलक्षणयेति शेषः। परेच्छायाः परेण दुरूहत्वात् कथं तया निग्रह इत्यत आह—इच्छयेति। उक्तस्य भागस्य स्वावसरेऽनुक्तविशेषणवत्तयाभिधानं हेत्वन्तरमिति लक्षणार्थः। न चैतत् झटिति संवृतावतिव्यापकं विशेष्यान्तरवचने चाव्यापकमिति वाच्यम्, आद्यस्य निग्रहस्थानसामान्यलक्षणेनैव निवर्त्तितत्वात्, अन्त्यस्य च उपरञ्जकमात्रपरत्वेन परिहृतत्वात् विशेष्यस्यापि विशेषणोपरञ्जकत्वात् परोक्तदोषोद्धाराय प्रागनुक्तसाधकभागवचनं तदित्यन्ये। प्रतिषिद्ध इत्युक्तिसम्भवप्रदर्शकं लक्षणानन्तर्भूतमित्याह—न चेति। चतुर्विधमिति। यद्यपि तुरीयापि विधा पूर्वत्रान्तर्भवति, तथापि हेतुत्वेन न दूषणं प्रयुज्यत इति भिद्यते, सामान्यविशेषन्यायाद्वा। [2]सपक्षे सत्त्वादिति। साधारणानैकान्तिकविवक्षोर्दूषणान्तराभिधानम्। जात्युत्तरतयेति।

---

1, NS. 5. 2. 6. 2, MS, 'सपचसत्त्वा०'.

यथा, एवं विपक्षव्यावृत्तत्वादित्युक्ते सपक्षव्यावृत्तत्वे सतीति यथा, एवं सन्दिग्धत्वादित्युक्ते असिद्धतया च दूषिते व्याप्तत्वेनेति यथा। एवं प्रत्यभिज्ञानबाधितत्वादित्युक्ते लून-पुनर्जातकेशाध्वना च प्रत्युक्ते अविसंवादिप्रत्यभिज्ञयेति यथेत्यादि सर्वदूषणेषु स्वयमूहनीयम्। एतच्च स्थापनागतं दूषणगतं वा परोक्तदोषप्रतीकारे हेत्वन्तरमेव। अप्रतीकारे तु यद्यपि यथाक्रमं हेत्वाभासनिरनुयोज्यानुयोगौ सावकाशौ, तथापि हेत्वन्तरमेव वाच्यम्, विशेषणाभिधानेनाविशिष्टासामर्थ्यस्य सिद्धस्वीकारत्वात्। तदुत्तरयोस्तु साध्यत्वात् यथा अनित्यः शब्दः बाह्यकरणग्राह्यत्वादित्युक्ते योगिप्रत्यक्षैः परमाणुभिरनेकान्तेन च प्रत्युक्ते अस्मदादीतिमात्रपदविशेषणोक्तौ अदुष्टस्यैव दोषाभासदर्शनात्। विशेषमिच्छतस्तु पर्यनुयोज्योपेक्षणसहवृत्तिकमिदं हानिवत् प्रतिज्ञान्तरवत्। तद्वदेव च परिकरशुद्धिरप्यस्येति ॥ ६ ॥

## [1]प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्।

अर्थान्तरमिति लक्ष्यनिर्देशः। अन्यदित्यध्याहारात् पञ्चम्युपपत्तिः, अन्यथा

---

स्वव्याघातकत्वेनेत्यर्थः। विपक्षव्यावृत्तत्वादिति। असाधारणानैकान्तिकतां विवक्षोर्दूषणाभिधानम्। सन्दिग्धत्वादिति। सन्दिग्धासिद्धतां विवक्षोर्यद्यपि दूषणमप्यनुमानमेव, तथापि स्थापनात्वदूषणत्वभेदमात्रेणैव तदुक्तम्। अत एवाह—एतच्चेति। यथाक्रममिति। स्थापनायां हेत्वाभासो दूषणे तु निरनुयोज्यानुयोगः। तदुत्तरयोरिति। अत्र साध्यत्वमुभयवाद्यसम्प्रतिपन्नत्वं तत्र हेत्वाभासत्वमुदाहरति—यथेत्यादि। 'विशेषणोक्तावि'त्यन्तेनादूषणाप्रतीकारे निरनुयोज्यानुयोगमुदाहरति—अदुष्टस्यैवेति। अत्राभासरूपदूषणस्य प्रतीकारस्तदा स्याद्, यदि तस्याभासतोद्भाव्येत्यर्थः। ननु हेत्वन्तरं पूर्वदूषणोद्धारसमर्थं न वा? आद्ये, न निग्रहस्थानत्वम्, अन्त्ये निरनुयोज्यानुयोगेन गतार्थता। अत्राहुः—यत्र कृतकत्वेन शब्दानित्यत्वमभिधाय पश्चात् सामान्यविशेषवत्त्वे सत्यस्मदादिबहिरिन्द्रियग्राह्यत्वादित्यनेन स्थापनामेव साधयति। तत्रास्यासाङ्कर्यं प्रतिज्ञाहेत्वन्तराविषयज्ञानाविषयनिग्रहस्थानलक्षणं प्रकरणार्थः ॥ ६ ॥

संप्रति प्रकृतोपयोग्यर्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम्। नन्वर्थान्तरमिति यदि लक्ष्यनिर्देशः, तदावधिमदनिर्देशात् पञ्चम्युपपन्ना। अथावधिमदभिधानं तदा लक्ष्याभाव इत्यत आह—अर्थान्तरमिति। ननु किमर्थमध्याहारोऽप्रतिसम्बद्धार्थमित्यनेनान्वयोपपत्तिरित्यत आह—अन्यथेति। सहार्थविवक्षायां प्रकृतार्थेन सहाप्रतिसम्बद्धार्थमित्यन्वयाङ्गी-

---

1. NS. 5. 2. 7.

तृतीया स्यात् । लक्ष्यपदावृत्तेर्वा ल्यब्लोपो वा प्रकृतमर्थमनपेक्ष्येत्यर्थः । अप्रतिसंबद्धोऽप्रतिरूपसम्बद्ध इत्यर्थः । तेनाप्रतिसम्बद्धमननुरूपसम्बन्धं वचनमित्यन्यपदार्थः । एतदुक्तं भवति, प्रकृतं साधनं दूषणं चोपक्रम्य तदनभिधानमर्थान्तरम् । तच्च स्वमतपरमतोभयानुभयमतभेदेन चतुर्विधम् । तद् यथा अनित्यः शब्द ऐन्द्रियकत्वात् कार्यत्वाद्वा, गुणश्च स आकाशस्य, तदेव चोपाधिवशाच्छ्रोत्रं तेन चायं गृह्यते समवायादित्यादि । तथैवोपक्रम्य परमते च द्रव्यं शब्दः संयोगग्राह्योऽभिव्यक्तिधर्मा चायमित्यादि । तथैवोपक्रम्यानुमानगम्यमस्यानित्यत्वम् , अनुमानञ्च प्रमाणं तच्चतुर्विधं षड्विधं वा, किञ्चित् सत्तामात्रेण गमयति, किञ्चिज् ज्ञातं

---

कारात् । सम्बन्धमात्रविवक्षायां षष्ठी स्यादित्यपि द्रष्टव्यम् । अध्याहारापेक्षया आवृत्तेर्लघुत्वादध्याहारानपेक्षमर्थान्तरमित्यनेनैव पञ्चम्यन्तपदान्वयमाह—लक्ष्यपदेति । 'अन्यारादिति' सूत्रेतरशब्दोऽन्यपर्यायत्वेन वृत्तिकृता दर्शित इति भावः । ल्यब्लोप इति । ननु पञ्चम्या न शक्तिः, अन्यलभ्यत्वात्, न लक्षणा विभक्तौ लक्षणाया अव्युत्पत्तेः, व्यत्ययानुशासनवैयर्थ्याच्च । अथ कर्ममात्रे पञ्चमी ल्यबर्थस्य चाध्याहारः, अन्वयव्यतिरेकाभ्यां ल्यबर्थाध्याहार एव कर्मणि पञ्चमी व्युत्पन्नेति । न पदान्तरसमभिव्याहृताया अपि पञ्चम्यास्तदर्थत्वम् । न च ल्यबर्थः पञ्चमीवाच्यः कर्मणस्त्वध्याहार इत्येव किं न स्यादिति वाच्यम् , प्रथमाव्यतिरिक्तविभक्तेरन्वयप्रकारवाचकत्वादित्युच्यते, तर्ह्यत्रापि पक्षेऽध्याहार इति न प्राचीनपक्षाद्भेदः । अत्राहुः—ल्यबर्थाध्याहारो नादिरन्यस्त्वाधुनिक इत्येव पूर्वस्माद्भेदः । ननु वचनं सूत्रे विशेष्यतया न श्रूयते, इत्यत आह—अन्यपदार्थ इति । अप्रतिसम्बद्धोऽर्थो यस्येति बहुव्रीहौ योग्यं वचनमन्यपदार्थ इत्यर्थः । अननुरूपसम्बन्धश्च यद्यपि नासाधकत्वं हेत्वाभासातिव्याप्तेः । नापि प्रकृतानुपयोगित्वं अदृष्टद्वारा प्रकृतोपयोगिनोऽपि स्तोत्रपाठादेरर्थान्तरत्वात् । नाप्यनुद्देश्यत्वं हेतुपदादिव्युत्पादनस्यार्थान्तरतानापत्तेः, तथापि कथाङ्गसमयविषयप्रतिपाद्यार्थसम्बद्धानुपदर्शकत्वं तत् । प्रकृतमिति । ननु साधनस्य प्रकृतत्वं न तावद्विप्रतिपत्तिविषयसाध्यमात्रसाधकत्वं, पर्वतोऽयमग्निमानिति प्रतिज्ञाय पर्वतो वह्निश्च क्वचित् प्रत्यक्षौ उद्भूतरूपवत्त्वे सति महत्त्वादित्यादेरपि प्रकृतत्वप्रसङ्गात् । नापि वचनीयतयास्थेयसम्मतिविषयत्वं, हेत्वाभासाद्यभिधानेऽतिव्याप्तेः । प्रकृतशब्दाद्यङ्गकण्ठताल्वाद्यभिघाताद्व्युत्पादनाव्याप्तेश्च । अन्यच्च दुर्घटम् । नैवम् । प्रतिपाद्यत्वेन कथाप्रयोजकसमयविषयार्थसम्बन्धानुपदर्शकं वचनमर्थान्तरमिति विवक्षितत्वात् । हेत्वाभासाद्युद्भावने तु तथाभूत-

सदित्यादि । तथैवोपक्रम्य हेतुरयं हेतुश्च हिनोतेरित्यादि । झटित्यसमंजसबुद्ध्या समाधानमप्रतिसंदधानस्य तिरोधित्सयास्योक्तिसम्भवः । नन्वपूर्णे प्रकृते वाक्येऽर्थान्तरमभिदधतो न्यूनमेवोद्भाव्येत, पूर्णेऽप्यदुष्टे किमित्यर्थान्तरमवतारयेत् । दुष्टेऽपि दोषमुपेक्ष्य नार्थान्तरोद्भावनस्योपयोगः । न चार्थान्तराभिधानेऽपि प्रतिज्ञान्तरवत् पूर्वदोषः परिहृतो भवेत् येनोपादीयेत । एवमेवाभिधाने चातिप्रसंगादिति । न दुष्टतिरोधित्साया: सुलभत्वात् अदुष्टेऽपि दुष्टबुद्धेः कदाचित् सम्भवात् । न्यूनस्याप्यन्यस्य वा दोषस्य तद्वादिन्युपरतवचने दत्तावसरे चोद्भाव्यत्वात् । अन्यथा त्वतिप्रसङ्गात् । एतस्य चोच्यमानग्राह्यत्वात् ततस्तत्सम्भेदेऽप्येतदेवोद्भाव्यम् । अतएव न्यूनाद्युपेक्षायामप्युपेक्षणं न निग्रहः । अवसरे हि तत्तथा स्यात् , अनवसरोद्भावनवदिति । प्रकृतोपयुक्तमेव वाच्यमिति रहस्यम् ॥ ७ ॥

---

साध्यसाधनसम्बन्धाभिधानमस्त्येवेति नातिव्याप्तिः । तथैवेति । शब्दोऽनित्य इत्युपक्रम्येत्यर्थः । तदिति प्रमाणम् । चतुर्विधमिति स्वमते । षड्विधमिति परमते । किञ्चिदित्याद्युभयमते । अनुभयमतोदाहरणं हेतुरयमिति । अर्थान्तराभिधानेऽनवसरमाह—नन्विति । दुष्टेऽपीति । उभयसिद्धदोषेण स्थापनायां दूषितायां तेनैव वादिनि निगृहीते किं निग्रहान्तरेणेत्यर्थः । उद्भावनप्रयोजनाभावमाह—न चेति । प्रयोजनाक्षेपं समाधत्ते—दुष्ट इति । तथाप्यदुष्टे तिरोधातव्याभावेन तिरोधित्सेत्यत आह—अदुष्टेऽपीति । तत्रापि तिरोधानार्थमेवेति भावः । अपराक्षेपमपाकरोति—न्यूनस्येति । वदति वादिनि नायं किञ्चिद्वदिष्यतीति पूर्वमवधारयितुमशक्यमित्युपरत एव वचस्यवसर इत्यर्थः । अन्यथेति । प्रतिज्ञोच्चारणानुपदमेव न्यूनोद्भावनप्रसङ्गादिति भावः । एतस्य चेति । उक्तिकाल एव शक्यावधारणत्वात् न्यूनादेश्चोक्तिसमाप्तिग्राह्यत्वादिति भावः । तत इति । एतस्य शीघ्रोपस्थितत्वादिति भावः । नन्वर्थान्तरमपि कथमुच्यमानग्राह्यम् ? अत्रापि प्रकीर्णकमुक्त्वा पश्चादपि प्रकृतसङ्गतिं न करिष्यतीति पूर्वमवधारयितुमशक्यत्वेन प्रकृतसम्भावनायाः सुलभत्वात् । अपि च यदार्थान्तरवचनं तत्पूर्वं वाक्यार्थापर्यवसाने न्यूनत्वमेव अर्थान्तरमभिधाय हेत्वादिवचने चाप्राप्तकालत्वमिति कथं सम्भेदेऽप्यर्थान्तरमुद्भाव्यमिति—अत्राहुः । यत्रादुष्ट एव दुष्टबुद्ध्यार्थान्तरमभिदधाति तत्रान्यनिग्रहासांकर्यादन्यत्र सङ्करेऽपि न दोषः । यद्वानेकनिग्रहस्थानसम्भेदेऽप्यर्थान्तरमेवोद्भाव्यमिति यत्र समयस्तत्रासङ्करः । अथवा, कथारम्भादेव तत्कनिपातसम्भवो न त्वेवं न्यूनादावित्यसाङ्कर्याभिप्रायको ग्रन्थः । ननु यद्यसम्भेदेऽप्येतदेवोद्भाव्यन्तदा न्यूनाद्युपेक्षणमापतितमित्यत्राह—अतएवेति । तत्तथेति । तदुपेक्षणं तथा निग्रहः स्यादित्यर्थः ॥ ७ ॥

## [1]वर्णक्रमनिर्देशवन्निरर्थकम् ।

वतिना अवाचकप्रयोगमुपमिनोति । तेनावाचकप्रयोगो निरर्थकमित्यर्थः । तस्य चतुर्द्धा प्रयोगसम्भवः । प्रमादात्, यथा लिङ्गवचनविभक्तिविपर्यासः । वाचकाभिमानात्, यथा कृत्तद्धिताख्यातविपर्यासः । अभ्यासात्, यथा संस्कृतमुपक्रम्यापभ्रंशवचनम् । विकल्पितशेषोक्तेर्वा, यथार्थपरशब्दे परताप्रकारव्युदसनेन स्वरूपपरतायां वाङ्मात्रं चैतदितिवत् । कुतः पुनरेतन्निग्रहस्थानमेवमप्यर्थप्रतीतेः ? शब्दप्रयोगस्य च तावन्मात्रार्थत्वादिति चेत्, न ; मीमांसकादिकं प्रति वाचकापभ्रंशविभागस्य सिद्धत्वात् । यस्याप्ययमसिद्धस्तेनापि समानसमयैरेव पदैर्वक्तव्यमन्यथा कथावाक्यनिष्पत्तेस्तादर्थ्यव्याघातात् । के समानसमयाः शब्दा इति दुरूहं पर-

---

ननु वर्णक्रमनिर्देशवदिति यदि मतुप्, तदा एकाक्षरनिरर्थकाव्याप्तिर्घटादिपदातिव्याप्तिश्च, तस्याप्युक्तनिर्देशवत्त्वादित्यत आह—वतिनेति । तथाप्यतिव्याप्तिः, सादृश्यमात्रस्य सर्वत्र भावात् । विशेषस्यानिर्वचनात् । सादृश्यस्य च भेदनियतत्वेन वर्णक्रमनिर्देशे निरर्थकं न स्यात् । मैवम् । अवाचकत्वेन तुल्यत्वस्य योग्यतया विवक्षितत्वात् । निर्देशस्य चाशब्दरूपतया तद्भेदः सादृश्यवति शब्दात्मनि निरर्थकेऽस्त्येव, शब्दरूपत्वेऽपि वा निर्देशस्योक्तसारूप्यमात्रस्य तत्र सत्त्वात् । तेनेति । ननु यत्किञ्चिदवाचकत्वं सर्वावाचकत्वञ्च सर्वस्येत्यतिव्याप्तिः । न चोद्देश्यावाचकत्वं लौकिकवैदिकलक्षणाद्यतिव्याप्तेः । द्राविडादिभाषायामुद्देश्यविशेषाज्ञाने निरर्थकोद्भावनस्याशक्यत्वाच्च । नापि वाचकत्वं व्याकरणादिसंस्कृतश्रोत्रग्राह्यजातिविशेषस्तदभावो वाचकत्वं व्यञ्जकत्वाभिमतेनैवान्यथासिद्धेः, एकवाचकस्य सर्ववाचकत्वापत्तेश्च, जातेर्निष्प्रतियोगिकत्वात् । अत्राहुः—अवाचकमात्रप्रतिपादकमभिप्रेतम् । तथा च यो यस्याप्रतिपादकस्तत्र तस्य प्रयोगे तन्निरर्थकमिति लक्षणार्थः । प्रतिपत्तिहेतुव्युत्पत्तिश्च शक्येऽपि लक्षणयापीति नातिव्याप्तिः । अव्युत्पन्नात्तु लक्षणानिरर्थकमेव । अत्र तावत्कालिको भ्रमः प्रमादस्थायिभ्रमश्चाभिमान इति तयोर्भेदः । अत्र प्रमादस्याकृतिगणत्वेनाप्रतिभादिसंग्रहः । स्वरूपेति । प्रकृतानन्विते तच्छब्दरूपमात्रप्रतिपत्तिपरतायामित्यर्थः । तस्य प्रकारमाह—वाङ्मात्रमेतदिति । लिङ्गादिविपर्यासापभ्रंशादिवचनस्य निग्रहस्थानत्वमाक्षिपति—कुत इति । [2]मीमांसकादिकमिति । ननु विभागे धर्ममात्र उपयुज्यते न तु प्रतिपादकत्वे । अत्राहुः—यत्र कथायां पूर्वं समयः

---

1. NS. 5. 2. 8. 2. MS. 'मीमांसकमि०'.

बुद्धेरप्रत्यक्षत्वादिति चेत्, न; प्रागेव तदुपायव्याकरणादिव्यवहाराभ्युपगमात्। न चैवं भूतानां विपर्यासानां परिषत्प्रतिवादिसमानतास्ति, अर्थप्रत्ययस्तु मणिप्रभायां मणिबुद्धिन्यायेन भवन्नपि न तेषां सार्थकत्वमवस्थापयतीति युक्तमस्य निग्रहस्थानत्वम्। अन्यथार्थसामर्थ्यसंवरणार्थं दाक्षिणात्यस्य स्वदेशभाषया प्रत्यवतिष्ठमानस्य किं वक्तव्यं पाश्चात्त्यैरित्यज्ञानमेवोत्तरवादिनः सर्वत्रेति। गतं कथाव्यसनेन। तस्मात् समानसमयैरेव पदैर्वक्तव्यमिति रहस्यम् ॥ ८ ॥

## [1]परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम्।

त्रिरभिहितमपि वादिना परिषत्प्रतिवादिभ्यामविज्ञातमर्थवत्तया अविज्ञातमित्यर्थः। वाचकप्रयोगत्वान्निरर्थकाद् भेदः। अनन्वयानिश्चयेनापार्थकात्। पराज्ञाननिग्रहापादनव्यामोहात् सभाक्षोभाद्वा अस्योक्तिसम्भवः। तच्च त्रिविधं स्वीयस्वीयतन्त्रमात्रारूढम्। यथा पञ्चस्कन्धद्वादशायतनचतुरार्यसत्यमित्यादि

---

क्रियते, वाचकैरेव वक्तव्यमिति तत्र तमतिक्रम्य वचने कथं न निग्रहः। नन्वपभ्रंशानामवाचकत्वेन ततोऽर्थप्रत्ययाभावे प्रवृत्तिर्न स्यादित्यत आह—अर्थप्रत्ययस्त्विति। मणिप्रभायां मण्यारोपादिव अपभ्रंशे वाचकत्वारोपादप्यर्थप्रत्ययो भवन्नशक्तिं कल्पयत्यन्यथोपपत्तेः। किञ्चिद्धि स्वरूपसत्कारणं किञ्चिच्च ज्ञायमानम्। तत्राद्यं कार्यमारोपितान्न भवति, द्वितीयकार्यन्तु भवत्येवेत्यर्थः। विपक्षे दण्डमाह—अन्यथेति ॥ ८ ॥

निरर्थकवचनस्यार्थनिरूप्यत्वात् सार्थकत्वेन पूर्वव्यावृत्तेश्च सङ्गतिः। त्रिरभिधाने परिषत्प्रतिवादिनोः प्रयोजनाभावादन्यथा व्याचष्टे—त्रिरिति। ननु वचनस्वरूपस्य श्रोत्रप्रत्यक्षत्वात् नाविज्ञातमतः पूरयति—अनुत्तरयेति(?)। एतच्चाविज्ञातार्थमिति लक्ष्यनिर्देशादवगम्यत इति भावः। अवहिताविकलपरिषत्प्रकृतार्थान्वयबोधानुगुणोपस्थित्यजनकवाचकपदप्रयोगोऽविज्ञातार्थमिति लक्षणार्थः। पञ्चस्कन्धेति। रूपादयः पञ्चेन्द्रियाणि रूपस्कन्धः, सविकल्पकं ज्ञानमिति संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं विज्ञानस्कन्ध इति पञ्च स्कन्धाः। द्वादशायतनानि षडिन्द्रियाणि षड् विषयाः, चतुरार्यसत्यं दुःखं समुदायो निरोधो मार्गश्चेति संसारोऽस्याः समुदेतीति समुदायस्तृष्णानिरोधः। सहेतुकदुःखापगमः। मार्गश्च सम्यक् ज्ञानं मोक्षोपायत्वात्। काष्ठखड्गः, कपालं, पुरोडाशश्रपणयोग्यं मार्दं खर्परखण्डम्। एतच्च सर्वेषां प्रसिद्धं

---

1. NS. 5. 2. 9.

बौद्धानां, स्फ्यकपालपुरोडाशादि मीमांसकानामित्यादि। गमितयोगमनपेक्षितरूढिकम्। यथा कश्यपतनयाधृतिहेतुरयं त्रिनयनतनययानसमाननामधेयवान् तत्केतुमत्त्वात् रसिनीवदित्यादि। पदविवेकोपायसमासप्रकरणाद्यपायापादितसन्देहं यथा श्वेतो धावतीति। अत्र प्रथममुभयानुमत्या क्वचिदुपादीयेतापि वादिनोः परस्परमताभिज्ञानशौहीर्यात्, अन्यथा सोऽप्यर्थः साधारणवचसैव प्रतिपाद्यः। तदुत्तरं तु द्वयमनादेयमेव। परिषत्प्रतिवादिनोर्जाड्येनापि वादिवाक्यानवबोधोपपत्तेर्नेदं निग्रहस्थानमिति चेत्, न; यथोक्तस्य बोधानुपायत्वात्। लोकरूढमगमितयोगं प्रकरणाद्यापन्नं विशदमद्रुतोच्चारितं हि पदजातमर्थप्रतीतेरङ्गम्, एतद्विपरीतमनुपायमुपाददानो वादी निग्राह्य एव। अन्यथा वैजात्यात् प्रतिवाद्यपि गमितयोगादिभिर्जल्पन्न निगृह्येत, तथा च कथा नाभासा नाप्यनाभासेति स्यात्। तर्हि, किं त्रिभिरभिधानविलम्बेन उक्तमात्रमेव यन्न बुद्धं तत्तथोद्भाव्यतामिति चेत्, न; अनवधानमन्दप्रसिद्धविपरीतबोधशङ्काव्युदासार्थं परिषदावश्यं तदपेक्षणात्। परिषदनवबोध एवास्यावतारात्। अन्यथा, अतिप्रसङ्गात्। प्रतिवादिनोऽनवबोधविभावनयैव निवृत्तेः।

---

वारद्वयाभिधानम्। अवहितीभूय श्रुतस्यापि वाक्यस्य यदि मन्दप्रसिद्धानि पदानि यदि वा योग्यतावैधुर्यवन्ति, तदापि न ततोऽर्थप्रत्यय इति तदवधारणार्थं न मीमांसकानामिति संपातायातम्। न च पञ्चस्कन्धादि निरर्थकमेव। तदर्थावाचकत्वादिति वाच्यम्। स्कन्धपदस्य समूहवाचकस्य रूपादिसमूहविशेषपरत्वादेवमन्यत्राप्युदाहरणे द्रष्टव्यम्। द्वितीयां विधामाह—**गमितेति**। दुरधिगमयोगमित्यर्थः। कथमित्यत उक्तम्—**अनपेक्षितेति**। रूढिपूर्वको हि योगः पङ्कजादिपदवत् सुबोध इत्यर्थः। **यथेति**। पर्वतोऽग्निमान् धूमवत्त्वादिति वक्तव्ये कश्यपतनयेत्याद्याह। कश्यपतनया पृथिवी, तद्धृतिहेतुः पर्वतः, त्रिनयनतनयः कार्त्तिकेयः, तस्य यानं शिखी मयूरस्तत्समाननामधेयवान् वह्निमानित्यर्थः। रसिनी महानसम्। तृतीयां विधामाह—**पदविवेकेति**। प्रकरणाद्यभावे श्वेतो धावतीत्युक्तं किं सारमेय इतो द्रुतं गच्छति, श्वित्री वा नेनेक्ति इति सन्देह इत्यर्थः। प्रथमाभिधानस्य न्यायप्राप्तत्वादपरयोरभिधानयोरुपयोगमाह—**अनवधानेति**। उक्तमात्रमेव यन्न बुद्धं तन्न तावत् प्रतिवादिना सर्वत्र स्वाबोधाविष्कारमात्रेणैव तेन वादिनो जयप्रसङ्गात्। तस्मात् परिषदा यन्न बुद्धमिति वक्तव्यं तत्र प्रथममनवबोधः, परिषदनवधानादपीति कथमन्यापराधेन वादिनिग्रहः स्यादिति

तथापि त्रिरिति नियमः कुत इति चेत्, ततः परमप्रतिपत्तेरनन्यहेतुकत्वात्। न हि बुभुत्सया पुनरभिधापयति परिषदनवहिता चेति सम्भवति। नापि स्थेयत्वयोग्यानां प्राश्निकानां सर्वेषामेव त्रिर्भङ्ग्यन्तराभिहितमसाम्प्रत्यायिकमन्यत्रोक्तिकुसृष्टेः। न च बुद्धेऽपि बोधं नाङ्गीकुर्यादिति परिषदि सम्भवति, वीतरागत्वात्। तस्मात्त्रिरिति नियम एवेति। निरूढैरेव पदैर्वक्तव्यमिति रहस्यम् ॥ ९ ॥

## [1]पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्।

पौर्वापर्यं विशेषणविशेष्यभावः, तस्य तेन वा अयोगो निराकाङ्क्षत्वं, तस्मादप्रतिसम्बद्धार्थमनन्वितार्थमपार्थकं पदजातं वाक्यजातं वेत्यर्थात्। एतस्य साभिधेयत्वान्निरर्थकासङ्करः। अनन्विततया चान्वयवतोऽर्थान्तराद्भेदः। तच्च त्रिविधं, मुख्यं

---

तृतीयवारमभिधानमित्यर्थः। तथापीति। यावता वारेणावरोधविरोधिनी कुसृष्टिरनेन कृतेति मध्यस्थावगमो न भवति, तावद्वारं वादनं न तु त्रिरिति नियम इति भावः। ततः परमिति। वारत्रयेणैव बोधविरोधविधूननान्मध्यस्थतादृशावगमाभावस्यापि तावतैव सिद्धिरिति भावः। तद्विशदयति—न ही ति। निरूढैरिति। प्रसिद्धसमयैरित्यर्थः॥ ९ ॥

अर्थनिरूप्याविज्ञातार्थानन्तरमन्वयव्यतिरेकनिरूप्यापार्थकलक्षणम्। पौर्वापर्यमिति। विशिष्टज्ञाने विशेषणज्ञानस्य हेतुत्वेन तयोः पौर्वापर्यात् तद्विषययोर्विशेषणविशेष्ययोस्तथात्वमुपचारादुच्यत इत्यर्थः। निराकाङ्क्षत्वमुपलक्षणम्। अन्वयविरोधेनैव सामान्यत उपस्थितेनायोग्यासन्नादेरप्युपग्रहात्। तस्मादिति। नन्वेतज्जनितान्वयबोधेऽतिव्यापकं तस्यापि निश्चितानन्वयात्। किञ्च, वस्तुगत्यान्वयविरहो हेत्वाभासेऽपि अन्वयनिश्चयाजनकत्वञ्च व्यवहितोच्चरितेऽप्यसिद्धम्। स्थेयप्रतिवादिनोः कदाचित्तेनाप्यन्वयप्रतीतिजननात्। मैवम्। समभिव्याहृतान्वयप्रतीत्यजनकोपस्थितिजनकं वचनमपार्थकमिति विवक्षितत्वात्। जनितान्वयबोधञ्च पदं पुनरुपस्थितिजनकमेव न भवति। पर्याप्ते च वाक्ये समभिव्याहृतमन्यत्रास्त्येवेति नातिव्याप्तिः। क्वचिद्बाधादिसङ्करस्य चादोषत्वात्। केचिदयोग्यानासन्नयोरपि कदाचिद् योग्यतासत्तिज्ञानेनान्वयदर्शनादतिव्यापकं मन्यमाना यत्काले यत्रैकवाक्यताप्रयोजकरूपाभावस्तत्काले तदपार्थकमित्याहुः। मुख्यमिति। कुण्डमजाजिनं पललपिण्ड इति भाष्योदाहृतमसम्भवदुक्तिकमिति यथाशब्दः सादृश्ये। तेन विनिश्चितानन्वयत्वेन सादृश्ये न महाजनपरिगृहीताद्यग्रे दर्शयिष्यमानमुदाहरणं ग्राह्यम्। सभाक्षोभादर्थावबोधे परस्याज्ञानमुद्भावयिष्यामीति व्यामोहाद्वोक्तिसम्भवोऽस्त्येवेति भाष्योक्त-

---

1. NS. 5. 2. 10.

यथा—भाष्योदाहृतं, व्यवधानानन्वयम्। यथा गच्छति पयसाश्वेन भुक्त्वा नगरं चैत्र इति। विकल्पशेषानन्वयं पदार्थाभ्युपगमेऽपि सम्भावितसमस्तान्वयप्रकारखण्डनात्तदनभ्युपगमेन द्रष्टव्यम्। विकल्पान्तःपातिप्रकाराभ्युपगमे तु यथोक्तखण्डनमेव निग्रहः। असमर्थविशेषणानन्वयं चतुर्थमपार्थकमस्तीति केचित्। तदशिष्यमसाम्प्रदायिकत्वादतिप्रसङ्गाच्च। हेत्वाभासान्तर्भूतं हि तदिति वार्त्तिकम्। न च ततोऽन्वयप्रतिपत्तिरेव न स्यात्। भूता त्वसामर्थ्येन बाध्यते। तथापि चापार्थकत्वे विरोधहेत्वाभासादीनामप्यत्रैवान्तर्भावः स्यात्। तस्माद् यत्रैव अन्वयानवगतिस्तदेवापार्थकं न तु यत्रासौ बाध्येतापीति। एतेन व्यधिकरणानन्वयमप्यपार्थकमिति निरस्तम्। उक्तिसम्भवस्तत्र प्रकारद्वयस्य

---

मुदाहरणं ग्राह्यमेवेत्याहुः। व्यवधानेति। पयसा भुक्त्वाऽश्वेन गच्छतीति वक्तव्ये। नन्वत्रापि तथैव मध्यस्थस्यावगमः सम्भवति, यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य स इति न्यायात्। अत्रैतन्न्यायानुसन्धानरहितस्यान्वयज्ञानानुदयात् तदभिप्रायेणोदाहरणमपार्थकमित्यर्थः। विकल्पशेषेति। यावन्तोऽन्वयप्रकाराः सम्भवन्ति, तावन्तो विकल्प्य दूषयित्वा अथानन्वित एवायं पदार्थस्तदपार्थकमित्यर्थः। पदार्थाभ्युपगम इति निरर्थकसाङ्कर्यपरिहाराय। असमर्थेति। यथा शब्दोऽनित्यः प्रमेयत्वे सति कृतकत्वादित्यत्र विशेषणवैयर्थ्ये तस्य वाक्यार्थस्तत्र बाधानन्वय इत्यर्थः। असाम्प्रदायिकत्वे हेतुमाह—हेत्वाभासेति। विशेषणान्तर्भावेन व्याप्यसिद्धेर्व्याप्यत्वासिद्धेस्तस्यान्तर्भावादित्यर्थः। अतिप्रसङ्गं विवरितुं पीठमारचयति—[1]न च तत इति। न च केवलं विशेष्यव्यभिचार एव विशिष्टे व्याप्तिसत्त्वात् तत्रान्वयप्रतीतेरेव न भवतीति वाच्यम्, सुरभिधूमेऽपि वृत्तिमत्त्वे सति वह्न्यभाववद्वृत्तित्वेन वह्निव्याप्यत्वभानात्। अतिप्रसक्तिं दर्शयति—[2]तथापि चेति। एतेनेति। यत्र व्यधिकरणं तदधिकरणतयोच्यते, तत्रापाततोऽनन्वयेऽपि नापार्थकतास्वरूपासिद्धविरुद्धादावेवान्तर्भावात्। अनन्तर्भावे वा तयोरप्यत्र प्रसङ्गादित्यर्थः। ननु चतुर्थोऽप्यस्ति प्रकारो यथा सामान्यवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वादिति पञ्चम्युपस्थापितेन हेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयात्। मैवम्। सप्तमीबलात् सामान्यवत्त्वस्यास्मदादिबाह्यकरणप्रत्यक्षत्वसामानाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात्। प्रकारद्वयस्येति। चरमस्येत्यर्थः। तत्र व्यवहितान्वये उक्तिसम्भवमाह—

---

1. MS. 'न च त इति'.
2. MS. 'तथा चेति'.

पराज्ञानापादनव्यामोहाद्वा प्रतिवाद्यापादनाद्वा प्रमादाद्वा, मुख्यस्य तु कथम्? न हि योग्यः स्वस्थः परप्रतिपादनव्यापृतोऽनन्वितं मुख्यतो जल्पतीति सम्भवतीति। न अकुशलस्य वास्तवेनान्वयेन तरलितस्य यथोक्तेरुपपत्तेः। यथा महाजनपरिगृहीता वेदाः नार्वाचीनपुरुषप्रणीताः, अनादिश्च संसारः, अकर्तृकञ्च क्षित्यादि जगद्वैचित्र्यञ्च न निर्हेतुकमित्याद्यनन्वितं सूत्रप्रायमिति। अनन्वितं न ब्रूयादिति रहस्यम् ॥ १० ॥

## [1]अवयवविपर्यासवचनमप्राप्तकालम्।

निगदव्याख्यातमेतत्। अवयवशब्दस्त्वत्र समस्तकथाभागसंग्रहार्थः। तेन चतुर्विधमेतत्, पादपादांशावयवतदंशविपर्यासभेदात्। वादिना हि प्रयोगोऽभिधेयः। तदनन्तरं संक्षेपतो विस्तरतो वा हेत्वाभासोद्धारः कार्यः, प्रतिवादिनापि जल्पे वादिप्रयुक्तं हेतुमुपालभ्य स्वपक्षसाधनं वक्तव्यम्। अथ हेत्वाभासा उद्धरणीया इति क्रमः। तत्र यदि प्रथमत एव हेत्वाभासानुद्धरति

पराज्ञानेति। विकल्पितशेषानन्वये तमाह—प्रतिवादीति। प्रतिवाद्यापादितबाधको हि वादी स्वपक्षे सिद्धान्तमजानन्न किञ्चिदभिधाने सार्वलौकिकाद्भङ्गाद् भीतः परिषदनुरञ्जनाय यत् किञ्चिदनन्वितं जल्पतीत्यर्थः। मुख्यस्य त्विति। उक्तिसम्भव इत्यनुषज्यते। वास्तवेनेति। महाजनपरिग्रहेऽर्वाचीनाप्रणयने च संसारानादिताहेतुरिति वास्तवोऽन्वयो विद्यत एव। न ह्यर्वाचीनपुरुषप्रणीतेषु महाजनपरिग्रहः सम्भवति। एवमुत्तरत्रापीत्यर्थः। ननु शब्दो नित्यः कृतकत्वादिति परानुमाने विरुद्धोऽप्यपार्थकः स्यान्निश्चितानन्वयात्। मैवम्। अनन्वये विरोधस्योपजीव्यत्वेन तस्यैव स्वतो दोषत्वात्। व्योमकमलं सुरभि-पद्मत्वादित्यपार्थकमेव, अयोग्यताज्ञानेन निश्चितान्वयात्। आश्रयासिद्धिस्त्वसंकीर्णा आश्रयविशेषणाप्रतीतौ द्रष्टव्या। एतन्निग्रहस्थानव्युत्पादनफलमाह—अनन्वितमिति ॥ १० ॥

अथ सिद्धान्तनिरूप्यनिग्रहस्थानत्रिकलक्षणप्रकरणम्। अनाकांक्षितत्वस्य सामान्यत उपस्थितस्य तेनैवान्वयान्नाव्यापकमित्याशयवानाह—अवयवशब्द इति। वादिना सिसाधयिषितसाध्यधर्मसिद्ध्यर्थं हेतुप्रयोगः हेत्वाभासशङ्काकलङ्काभावश्च कथायाः प्रथमः पादः। प्रतिवादिना तस्योपालम्भो द्वितीयः पादः। ततः स्वपक्षे हेतुप्रयोगः हेत्वाभासनिरासश्च तृतीयः। एतेषां चासङ्कीर्णप्रयोजनत्वात् त्रित्वम्। चतुर्थस्तु कथायाः पादो जयादिव्यवस्थापनं, स च फलतयेह निग्रहानुपयुक्ततया

1. NS. 5. 2. 11.

पश्चाद्धेतुं प्रयुङ्क्ते तदा पादांशविपर्यासः। प्रतिवादी वा प्रथमतः स्वपक्षे साधनमभिधत्ते, पश्चात् परोक्ते हेतौ दोषं, तदा पादविपर्यासः। अवयवविपर्यासस्तु प्रसिद्धः। तदंशविपर्यासो यथा सकर्तृकं विवादाध्यासितमिति। एतस्य सभाक्षोभादुक्तिसम्भवः। अर्थप्रत्यायने क्रमो न विवक्षितः, व्यतिक्रमेणाप्यर्थप्रतीतेरित्यभिमानाद्वा। ननु युक्त एवायमभिमान इति चेत्, न; अप्रयुक्ते साधने दोषचर्याया निराश्रयत्वात्। उपस्थिते दूष्ये स्वपक्षसाधनस्याप्रस्तुतत्वात्। तस्मात् पादतदंशानां क्रमो विवक्षित एव, अवयवतदंशानां च चर्चित एव प्रथमेऽध्याये। एवञ्च व्यतिक्रमेणाप्यर्थप्रतीतिः, कृतृरासदिवादिवद् (?) द्रष्टव्येति। आकाङ्क्षाक्रमेण ब्रूयादिति रहस्यम् ॥ ११ ॥

## [1]हीनमन्यतमेनाप्यवयवेन न्यूनम्।

नन्वसम्बद्धमेतत्। वादान्तरविलोपप्रसङ्गात्। तथा हि सौगतो यदि

न गणितः, उत्तरकालीनत्वात्। तत्र पादांशविपर्ययस्य निग्रहस्थानत्वोपपादनायाह—अप्रयुक्त इति। पादविपर्यासमाह—उपस्थित इति। तस्योक्तस्यापि पूर्वस्थापनाविरोधेनाफलत्वादिति भावः। न चोपस्थितेऽपि दूष्ये यदि स्वसाधनमभिधाय दूष्यमुद्धरेत्तदा को दोष इति वाच्यं यत्र दोषोद्धारः कर्तव्यस्तस्य ज्ञापनं विनोद्धारस्याश्रयासिद्धत्वादिति भावः। ननु व्यतिक्रमेऽपि यद्यर्थप्रतीतिः किमर्थं पूर्वोक्तक्रमादर इति तद्व्यतिक्रमेण निग्रहः। न चेत्तदा व्युत्क्रमेणाभिधानेऽर्थप्रतीत्यभावादपार्थकमेवेत्यभिधानबीजादसम्भवदुक्तिकत्वमित्यत आह—एवञ्चेति। यद्यपि व्युत्क्रमेणाप्यर्थप्रतीतिः, तथापि शास्त्रप्रकाराद्दतक्रमविशेषस्यैवार्थप्रत्यायकत्वेनाभ्युपगतत्वात्तदुल्लङ्घने निग्रह इत्यभिसन्धिः। तेन स्वसिद्धान्ताभ्युपगतकथाभिधानक्रमव्युत्क्रमेण कथाभिधानेऽप्राप्तकालमिति लक्षणम्। न चापसिद्धान्तविरोधान्यतरार्थप्रसङ्गः, क्रमविपर्ययस्यैवोपजीव्यत्वेन दोषत्वात् ॥ ११ ॥

पूर्वस्येवास्याप्यवयवनिरूप्यत्वेन सङ्गतिः। अत्र सूत्रेऽपिशब्दो वर्णमालानुस्वारन्यूनत्वस्यानुक्तस्य समुच्चयार्थः सामग्र्यधीनकार्यस्यैकदेशादनिष्पत्तेः। कथाभागान्तरसंग्रहार्थ इत्यन्ये। अन्यतमशब्दस्य बहुष्वेवानुशासनात्। तत्रैवास्य सम्भवे बौद्धस्य द्व्यवयववादिनो न्यूनं न संगृह्येतेति तत्संग्रहार्थोऽपिशब्द इत्यपरे। हीनमित्यस्य विशेष्याकांक्षायां वचनमिति सूत्रेऽध्याहार्यमित्येके। तन्न। हीनन्यूनपदयोरेव धर्मिपरत्वात्। न चैवं धर्मिमात्रलाभेऽपि वचनरूपस्य तस्यालाभः सामान्यवाचित्वेऽपि प्रकरणादिना वचनलाभात्। वादान्तरेति। वादान्तरमतातुल्यसंख्यावयवाङ्गीकर्त्रो-

1. NS. 5. 2. 12.

द्व्यवयवं प्रयोगं कुर्यात् न्यूनेन निगृह्येत ; अनिग्रहे वा वादी पर्यनुयोज्योपेक्षण-मासादयेत् । पञ्चावयवे त्वधिकेन निगृह्येत, तथा स्वीकारे वा अपसिद्धान्तेन । ततो द्व्यवयवे प्रयुक्ते नियमेन न्यूने चोद्भाविते अवयवान्तराणामनङ्गता बौद्धेन वक्तव्या, नैयायिकेनाप्यङ्गता तेषां व्युत्पादनीयेति सर्वथा कथानिष्ठा न स्यात् । न चैवमेवास्त्विति वाच्यं, निग्रहस्थानान्तरव्युत्पादनवैयर्थ्यप्रसङ्गात् । प्रतिज्ञा-द्यङ्गत्वानङ्गत्वविचारोऽपि वा न स्यात् । प्रयोगस्यानिर्णये प्रयोक्तुमशक्य-त्वादिति । इदमत्र तत्त्वम्—स्वसिद्धान्तनिर्णीतप्रयोगावयवपरित्यागाद्यपेक्षया न्यूनाद्यवतारः । नन्वेवमप्यपसिद्धान्तोऽस्तु, किमनेन ? न, नहि स्वसिद्धान्त-विपरीताचरणमपसिद्धान्तः, किन्त्वभ्युपगमः, अन्यथा सर्वनिग्रहस्थानानामपसिद्धान्तत्व-प्रसङ्गात् । न च न्यूनकरणेऽप्यनेन न्यूनस्यागमकत्वमङ्गीकृतं यतोऽपसिद्धान्तः स्यात् । ननु तथा नाभ्युपैति करोति चेति व्याहतम्, ततो यदि नाम शब्दो नाभ्युप-

---

रिति शेषः । यदि च बौद्धो न्यूनत्वभयेन पञ्चावयवमेव वाक्यं वदेत्, तत्राह—पञ्चावयव इति । अथ पञ्चानामवयवानां साधनत्वमेव बौद्धः स्वीकुर्यात्तत्राह—तथेति । कथानिष्ठेति । न च तदङ्गत्वविचारपतितनिग्रहस्थान एव कथापर्यवसानं स्यादिति वाच्यम्, न्यूनेन निरनुयोज्यानुयोगेन वा परस्याप्रतिपत्त्याद्यनुमानेऽपि पञ्चावयववादि-प्रयोगे न्यूनमधिकं वापतेदेव, तेनानुमाने कथं कथापर्यवसानं स्यादिति विवक्षितत्वात् । ननु प्रयोगानन्तरं न्यूनाधिकवादस्यैव प्रस्तुतत्वात् प्राथमिकार्थापर्यवसानेऽपि न कथायाः किञ्चित् क्षीणमित्याशङ्क्य निराकरोति—न चैवमिति । न्यूनाधिकयोरन्यतरप्राप्तौ प्रतिज्ञा-हान्यादेर्निग्रहस्थानस्यासंकीर्णस्योदाहरणाभावादिति भावः । न च नैयायिकवैशेषिकयोर-वयवसंख्यायां संप्रतिपन्नयोर्विवादे निग्रहान्तरव्युत्पादनसाफल्यमस्तीति वाच्यम्, तुल्यसंख्यावयवाङ्गीकर्त्त्रोरेव कथायामाक्षेपस्योपक्रान्तत्वात् । न च प्रतिज्ञाद्यवयवाङ्गत्व-विचारे निग्रहस्थानान्तरव्युत्पादनं सावकाशम्, तस्यानुमानच्छायामापाद्य साधकत्वे तत्रान्यूनाधिकयोरेवापत्तेः । प्रतिज्ञादीति । सन्दिग्धे हि साध्य उभयसिद्धमेव साधन-मुपादीयते, यदि च साध्यवत्प्रयोगपरिमाण एव विवादस्तदा साधनमपि सन्दिग्धमेवेति कथं तन्निर्णयायोपादीयेतेत्यर्थः । स्वसिद्धान्तेति । तेन कथायां स्वसिद्धान्ते वक्तव्य-त्वाभ्युपगतकथाभागानभिधानं न्यूनम् । कथानुकूलसमये यद्वक्तव्यतया व्यवस्थापितं तद्भागानभिधानं न्यूनमित्यन्ये । सिद्धान्तव्यतिक्रमेणापसिद्धान्त इत्याशयेन शङ्कते—नन्विति । स्वीकृत्यास्वीकारोऽपसिद्धान्तो न तु स्वीकृत्यान्यथाकरणमित्याशयेन

गमः तथाप्याभिप्रायिकः स्यात् । न उपक्रान्तपरिपूर्णवाक्यस्यापि मध्ये सभाक्षोभेण स्तम्भितस्यावयवान्तरावचनोपपत्तेः । वचनलिङ्गाश्चाभिप्राया इति न्यूनाभिधानेनैव तथाभ्युपगमस्याप्युन्नेयत्वेन ततो जघन्यप्रतीतिकत्वादिति । यद्वा, यथावस्तु यथासिद्धान्तं वा वक्तव्यमिति प्राङ्नियमादस्यावतारः । न चैवं सति प्रयोगशरीरचर्चाप्रसङ्गे वादान्तरसंक्रान्तिदोषः । अन्यतरासिद्धत्वोद्भावने सिद्धिव्युत्पादनवत् प्रकृतेन सम्बन्धादिति । परिपूर्णं वदेदिति रहस्यम् ॥ १२ ॥

## [1]हेतूदाहरणाधिकमधिकम् ।

अन्वितमुपयुक्तमपुनरुक्तं कृतकर्त्तव्यमभिधीयमानमधिकमिह ग्राह्यम् । तदधिकं

---

निराकरोति—न हीति । निराकरणान्तरमाह—वचनलिङ्गाश्चेति । उपजीव्यस्य स्वतोऽशक्तिसूचकत्वात् पृथगस्य निग्रहस्थानत्वमिति भावः । न च तदभिधानस्य न तथाभिप्रायव्याप्यत्वं सभाक्षोभादिनापि तद्विरहेऽपि तथाभिधानसम्भवादिति वाच्यम्, क्षोभादिविरहे सतीति लिङ्गविशेषणात् । यथावस्त्विति । न च वस्तुसत्ता कथायामनुपयुक्ता तथा च यथासिद्धान्तं वक्तव्यमिति नियमादेव न्यूनावतारे किमनेन ? सत्यम् ; वादाभिप्रायेणेति ब्रूमः । दृष्टान्तार्थमुक्तं, तथा चायमर्थः । यथावस्तु वक्तव्यमिति नियमादेव यथा कथा तथा यथासिद्धान्तं वक्तव्यमिति नियमस्तत्र न्यूनावतार इत्यन्ये । नन्वेवं तथा सिद्धान्त एव कथमित्यपेक्षायां सिद्धान्तव्युत्पादने वादान्तरसंक्रान्तिः स्यादित्यत आह—न चैवमिति । यथान्यतरासिद्धे वादिनोक्ते प्रतिवादिना चान्यतरासिद्धे उद्भाविते प्रतिवादिना तदैव न तत् साध्यते, किन्त्वभ्युपगतमात्रेणैवोच्यते तथा प्रकृतेऽपीत्यर्थः ॥ १२ ॥

पूर्ववत्सङ्गतिः, अधिकस्य सापेक्षत्वादपेक्षणीयमात्रोपस्थितौ तेनैवान्वय इत्यभिप्रायवानाह—अन्वितमिति । अन्वितमित्यपार्थकव्यवच्छेदः । उपयुक्तमित्यर्थान्तरस्य कृतकर्त्तव्यमिति प्रथमाभिधानस्य । नन्वेवमपार्थकादिसंकीर्णाधिकाव्याप्तिः । न । क्वचित् सङ्करेऽप्युपाधेरसंकरात् । असङ्कीर्णोदाहरणपरत्वात् । अत्रापुनरुक्तकृतकर्त्तव्याभिधानमधिकमिति लक्षणार्थः । न च कृतकर्त्तव्यत्वेनैवाशक्तिलिङ्गत्वाद्यर्थं लक्षणविशेषणमिति वाच्यम्, इतरभेदे व्यवहारे वा साध्येऽतिव्याप्तिवारकत्वात् ।

---

1, NS. 5. 2. 13.

निग्रहस्थानं व्यवहर्त्तव्यमित्यर्थः। तेनापार्थकादिव्यवच्छेदः, अधिकानुवाद-दूषणाधिकयोश्च संग्रहः। हेतूदाहरणग्रहणं त्ववयवान्तराधिकाभावप्रतिपादनार्थं न हि प्रतिज्ञानिगमनाधिकं सम्भवति। समानार्थत्वे पौनरुक्त्यात् विपर्यये अनित्यः शब्दः क्षित्यादिकं सकर्तृकमितिवदपार्थकत्वात्। धर्म्यैकत्वे अनित्यः शब्दो गुणश्चेतिवदर्थान्तरत्वात्। साध्यविशेषणानेकत्वे वर्णात्मको वाचकशब्दो विनाशी अनित्य इतिवदर्थपौनरुक्त्यादिति। एवं निगमनेऽपि। उपनयाधिकन्तु

---

लक्षणस्य च तदेकसाध्यत्वात्। न त्वसाधकत्वमपि साध्यं येन तत्र विशेषण-वैयर्थ्यं दोषः स्यात्। अतएव व्यर्थविशेषणे नीलधूमवत्त्वशरीराजन्यत्वादावधिकं निग्रहस्थानं व्याप्तिपक्षधर्मतयोः सत्त्वेन हेत्वाभासत्वाभावादिति मतमपास्तं, तत्र विशिष्टहेतौ कृतकर्त्तव्यत्वस्याधिकप्रयोजकस्याभावात्। यत्रैकेनापरस्य कृतकर्त्तव्यत्वं तत्रैवाधिकावतारात्। साध्यविशेषमाशङ्क्याह—व्यवहर्त्तव्यमिति। हेतूदाहरणाविवक्षाप्रयोजनमाह—अधिकेति। ननु चादूष्यास्तावदर्थान्तरमेव नाधिकम्। एकदूषणदूष्यस्यानुवादश्च हेत्वधिकप्रपञ्च एव, दूषणस्यानुमानरूपतया पञ्चावयवत्वमेव। अत्राहुः—हेत्वादिपदस्य न्यायावयवपरतया विप्रतिपत्तिविषयस्थापनारूपत्वादेतदुक्तम्, अनुवादस्य चातथात्वं दूषणे। न पञ्चावयवं वाक्यमिति न हेत्वाद्यधिकेन संग्रहः। ननूपलक्षणस्यैकेनैव पदेन सिद्धेः किं पदद्वयेनेत्यत आह—हेत्विति। सम्भवतः प्रतिज्ञाधिकप्रकारानुपन्यस्य दूषयति—'न ही'त्यादिना'ऽर्थपौनरुक्त्यादि'त्यन्तेन। ननु द्व्यवयववादिनो बौद्धस्य प्रतिज्ञाप्रयोगे प्रतिज्ञाधिकं भवत्येव। न च नैयायिकानां न सम्भवतीति वाच्यम्। यदा हि वायुः प्रत्यक्षः द्रव्यत्वादिति स्थापनाकालाकाशाभ्यामनैकान्तिकत्वेन दूष्यते, तदा यदि कश्चित् कालाकाशयोः प्रत्यक्षत्वमेव मन्यते, तदा नैकान्तिकत्वनिर्वाहार्थं काल आकाशश्च न प्रत्यक्षो नीरूपद्रव्यत्वादित्यनुमाने कालाकाशयोरन्यतरस्यैव साध्याभावसंसर्गसिद्धावुद्भावितानैकान्तिकत्वनिर्वाहद्वयस्य प्रतिज्ञायामुपादाने तेषामधिकं भवत्येव। न ह्यत्रापार्थकम्, पदार्थानां परस्परमन्वयात्। न पुनरुक्तम्, एकस्य पुनःश्रुत्यभावात्। नार्थान्तरम्, उभयोरपि प्रकृतत्वेनाविशेषात्। एवं निगमनेऽपि वाच्यम्। तस्मादुदाहरणग्रहणमजहत्स्वार्थलक्षणयोदाहरणादिपरं हेतुग्रहणन्तु हेतूपनययोः परम्पराधिकोदाहरणसूचनार्थम्। यथा मीमांसकानां हेतुद्वयकरणे। यथा वा सौगतस्योपनयद्वयकरणे इति रत्नकोषकारः। अत्राहुः। नैयायिकानां विप्रतिपत्तिविषये प्रथमस्थापनायां हेतूदाहरणयोरधिकमित्यभिप्रायकोऽयं ग्रन्थः। अर्थपौनरुक्त्यादिति। वाचकत्वस्य वर्णात्मकत्वव्यापकत्वादिति भावः। पुनरुक्तं द्विविधम्। तस्यैवार्थस्य पुनरभिधानं

हेत्वधिकान्न विशिष्यते। हेतूदाहरणयोस्तु नैवमन्यसङ्करः। अग्निमदिदं धूमवत्त्वादालोकवत्त्वाच्चेति हि न पुनरुक्तं धूमालोकयोर्भिन्नत्वादव्याप्तेश्च। नापार्थकम्। प्रतिज्ञार्थेनान्वितत्वात्। नार्थान्तरम्, उभयोरपि प्रकृतत्वेनाविशेषात् केवलं कृतकर्त्तव्यत्वमवशिष्यते। एवं यथा आपाकः यथा महानसमित्यत्रापीति। तदेतदधिकं स्वशब्देन विशेषतः आदिशब्देन सामान्यत इति द्विविधमनुसन्धेयम्। नैतन्निग्रहस्थानमप्रतिपत्तिविप्रतिपत्त्योरसूचकत्वादित्येके। तदसत्, परिषत्प्रतिवादिजिज्ञासामनुरुध्य कथाप्रवृत्तेः, अन्यथा अर्थान्तरादिकमपि निग्रहस्थानं न स्यात्। स्वेच्छया तस्यापि प्रस्तुतत्वात्। ततस्तां कथांगभूतामबुद्ध्वा अनङ्गतया वा बुद्ध्वा प्रवृत्तेरप्रतिपत्तिविप्रतिपत्ती कथं न स्तः। यदा तु परिषदः साधनान्तरोदाहरणान्तरयोरपि जिज्ञासा स्यात्, तदा का वार्त्तेति चेत्, यावत्स्फूर्त्ति वक्तव्यं न तु सामस्त्यनियमाभ्युपगमेन असर्वज्ञेन तस्याशक्यत्वात्। आभ्यासिकेन यावच्छास्त्रं वा वक्तव्यं तदवचने न्यूनावतारः। अगाधप्रज्ञेन यावत्परिषज्जिज्ञासं वा वक्तव्यम्। बहुवासरजल्पे हि सा स्वयमेव निवर्त्स्यति। अनिवृत्तौ सैव परिपन्थिनी, न चैतत् सम्भवतीति। दोषाभिधाने तु सामस्त्यनियमाभ्युपगमोऽपि

---

तदर्थव्याप्यस्य च। तत्राद्यानामेकत्वे हेतुमाह—भिन्नत्वादिति। द्वितीयानामेकत्वे हेतुमाह—अव्याप्तेश्चेति। तदेतदिति। स्वपदेनासाधारणवाचकपदेन। यथा धूमवत्त्वादालोकवत्त्वादित्यादौ। आदिपदेन यथा धूमवत्त्वादित्यादिभ्य इत्यादाविति। सामान्यतो विशेषतश्चाधिकं द्विविधमित्यर्थः। नैतदिति। यद्यपि विप्रतिपत्तिरप्रतिपत्तिश्च परस्पराव्यापकत्वान्न लक्षणं तथापि कथाङ्गाप्रतिपत्तिकथानङ्गाङ्गत्वाप्रतिपत्त्युन्नायकत्वं चास्त्येव निग्रहस्थानानामनुगतलक्षणान्तरे सत्यपीत्यभिप्रायः। परिषदिति। परिषत्प्रतिवादिनोश्चैकस्मिन्नेव हेतावुदाहरणे च जिज्ञासेत्यर्थः। तामिति जिज्ञासामित्यर्थः। स्वयमेवेति। विषयान्तरसञ्चारादेरावश्यकत्वेन कारणाभावादित्यर्थः। यत्र तु विषयान्तरसञ्चारो न तत्राह—अनिवृत्ताविति। परिपन्थिनीति। कथाविच्छेदस्येति शेषः। दोषाभिधाने त्विति। ननु प्रमाणस्य चतुष्ट्व नियमात्तद्विशेषानुमानस्य पूर्ववच्छेषवत्सामान्यतोदृष्टभेदेन त्रैविध्यात् साधनेऽपि परिमितत्वमस्त्येव। न च व्यक्त्यभिप्रायेणापरिमितत्वं वाच्यम्। दूषणेऽपि तुल्यत्वात्। अत्राहुः—यथा प्रकृतानुमाननिपतितयावद्व्यक्त्यभिधानं दूषणे कर्त्तुं शक्यं न तथा प्रमाणे। न हि प्रकृतसाध्यव्यक्तौ यावती प्रमाणव्यक्तिस्तावत्यसर्वज्ञेन सर्वा वक्तुं शक्यते, प्रकृतसाध्यव्याप्यानामानन्त्यात्।

शक्यः, तेषां परिमितत्वात्। स्फुटो दृढश्चायमर्थो भवत्विति व्यामोहादस्योक्तिसम्भवः। ननु कथमयं व्यामोह इति चेत्, न; स्फुटदृढत्वे हि निश्चयो वा स्यान्निःशेषनिश्चयो वा, अभ्यासेन संस्कारातिशयो वा। न प्रथमः, प्रथमेनैव सिद्धत्वात्। न द्वितीयः, तस्यानुमानसहस्रेणाप्यशक्यत्वात्। न तृतीयः, तस्य शिष्याद्यनुकम्पनीयविषयत्वात्। परिषत्प्रतिवादिनोश्च तद्विपरीतत्वात्। तथापि, प्रमाणमेव तत्, न ह्यनधिगतार्थगन्त्रेव तत् नैयायिकानामिति चेत्, सत्यम्; अनपेक्षितं बोधयन् पुरुषो निगृह्यते अर्थान्तरवदित्युक्तम्। तथाप्यात्मप्रौढिख्यापनमत्र फलमस्तीति चेत्, न; तस्य जिज्ञासितविषयस्यैव श्लाघाहेतुत्वात्। अन्यथा त्वतिप्रसङ्गादिति ॥ १३ ॥

अनेनैव न्यायेन सिद्धप्रतिपत्तेरर्थस्य प्रयोजनं विना पुनः प्रतिपादनाय वचनं पुनरुक्तं नाम निग्रहस्थानं तदवान्तरभेदेन प्रपञ्चयन् सूत्रयति—

**[1]शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्।**

यद्यपि 'पुनर्वचनं पुनरुक्तमन्यत्रानुवादादि'त्यनेनैव लक्षणेन सर्वसंग्रहः, 'शब्दार्थयो'रित्यनेनैव प्रपञ्चः, तथाप्युक्तस्य पुनर्वचनं न चार्थापन्नमुक्तं तत्राभिधानाभावादिति शङ्कां निराचिकीर्षुराह—

---

अतीन्द्रियत्वाच्चेति विवक्षितमत्र। निश्चयो वेति। संशयविपर्ययरूप इत्यर्थः। निःशेषनिश्चयः समस्तरूपसाक्षात्कारात्मक इत्यर्थः। अभ्यासेति। एकविषयानेकज्ञानोत्पादनेनेत्यर्थः। अर्थान्तरवदिति। अत एव च क्वचिदर्थान्तर एव सिद्धसाधनमन्तर्भवतीति भावः। तस्येति। स्वप्रौढिख्यापनस्येत्यर्थः। अन्यथेति। वाचकव्युत्पादनादिना सकलव्याकरणादिनाप्युपन्यासावकाशप्रसंगादित्यर्थः ॥ १३ ॥

अधिकस्येव पुनरुक्तस्याप्युक्तिनिरूप्यत्वेन तदनन्तरमस्य लक्षणकरणम्। उक्तिसम्भवमाह—अनेकेति (?)। स्फुटो दृढश्च भवत्वित्याशयेनास्य प्रयोग इत्यर्थः। यद्वा, स्वप्रौढिख्यापनरूपफलत्वेन नास्य निग्रहस्थानत्वमित्यत्राह—अनेनेति। जिज्ञासितविषयस्यैव श्लाघाहेतुत्वादित्यर्थः। 'प्रतिपादनाये'त्यनेन प्रतिपादनप्रयोजनत्वप्रदर्शनाद् बुद्धिपूर्वकत्वं प्रयोगस्य दर्शयता निग्रहस्थानत्वमस्योक्तम्।

---

1. NS. 5. 2. 14.

## [1]अर्थादापन्नस्य स्वशब्देन पुनरभिधानम् ।

पुनरुक्तमिति वर्त्तते । न ह्यत्र पुनःशब्द उक्तेरावृत्तिमाह, किन्तु प्रतिपत्तेः । तेन प्रतिपन्नस्योक्त्या पुनःप्रतिपादनमित्यर्थः । तच्च प्रतिपन्नं तत एव शब्दात् तत्पर्यायात् तदाक्षेपाद्वेति । तथा चार्थापन्नस्य पुनरर्थादापन्नत्वं न दोषाय । अविनाभावस्य पुरुषानधीनत्वात् । शब्दान्तरस्य स्वाभिधेयपरत्वेनोच्चरितत्वादिति । उदाहरणञ्च नित्योऽनित्य इति । अनित्यो विनाशीति । वाक्येऽप्येवमेव ।

---

ननु पुनःशब्देन समभिव्याहृतोक्त्या वृत्तिप्रतिपादनादर्थापन्नं न पुनरुक्तमित्यत आह—न ह्यत्रेति । न च वचनपदसमभिव्याहृतपुनःशब्दः कथं प्रतिपत्त्या वृत्तिमाहेति वाच्यम्, उच्यते ; अनेनेति व्युत्पत्त्या वाक्यार्थानुगुणज्ञानस्य वचन-पदेनोक्तत्वात् । तथा च प्रतिपादितस्य तत्प्रतिपादनानधिकप्रयोजनकं प्रतिपादनं पुनरुक्तमिति सामान्यलक्षणम् । विशेषलक्षणं ग्रन्थ एव स्फुटम् । नन्वाक्षिप्तस्य स्वशब्देनाभिधानं न पुनरुक्तं हेतोरेव व्याप्त्याक्षेपे उदाहरणाद्यभिधानाति-व्याप्तेः ? मैवम् । धूमवत्त्वादित्यादिहेतोर्व्याप्त्यादिप्रतिपादकत्वाभावात् । सामान्यतो वा हेतुत्वाक्षेपलब्धेऽपि व्याप्त्यादौ परिषत्प्रतिवाद्याकाङ्क्षितमधिकृत्य कथाप्रवृत्तौ तयोश्च स्वज्ञानविभावनार्थमेव तदभिधानस्य न्याय्यत्वात् । अनाकाङ्क्षितत्वे तु पौन-रुक्त्यस्येष्टत्वात् । पञ्चम्युक्तहेतुमात्रेण व्याप्त्यादेराक्षेपासम्भवाच्च । हेतुत्वाभिधानस्य व्यभिचारसाधारण्यात् । न चार्थादापन्नस्येति विशेषलक्षणे पुनःशब्दो व्यर्थः । अर्थादापन्नस्य स्वशब्देनाभिधानमित्यत एव प्रतिपत्त्या वृत्तेर्लघुत्वादिति वाच्यम्, तात्पर्यवृत्तिप्रतिपादनार्थत्वात्, अन्यथा तात्पर्याविषयेऽप्यर्थापन्ने अभिधानं पुनरुक्तं स्यात् । न त्वेवम्, एकपदार्थापन्नस्य शब्दान्तरापन्नत्वेऽपि पौनरुक्त्यं स्यादित्यत आह—तथा चेति । यदि तथा नोक्तं किमिति तथा प्रतिपद्यत इत्यत आह—अविनाभावस्येति । पुरुषेणापनेतुमशक्यत्वादित्यर्थः । नन्वेवमविनाभावस्य पुरुषेच्छाधीनत्वे प्रथममप्यर्था-पन्नत्वं न दोषः स्यात् । अथ प्रथमार्थापन्ने यत्र तात्पर्यं तत्रैव दोषस्तर्हि प्रथमार्थापन्ने यत्र तात्पर्यं तत्र द्वितीयार्थापन्ने तात्पर्यं दोषायैव स्यात् । तात्पर्यमेव कथमुन्नेयमिति प्रथमेऽपि तुल्यम्, तस्मादुदाहरणमात्रमिति साम्प्रदायिकाः । अथ मा भूदविनाभावः पुरुषाधीनः शब्दोच्चारणं तावत् पुरुषाधीनं तस्य चार्थापन्नोपस्थितौ प्रयोजकत्वादित्यत आह—शब्दान्तरस्येति । न ह्यर्थापन्न-प्रतिपत्तितात्पर्यकं शब्दान्तरोच्चारणं किन्तु स्वार्थप्रतिपादनपरमित्यर्थः । त एव शब्दा-

---

1. NS. 5. 2. 15.

अर्थादापन्ने तु पूर्वपदाक्षिप्तोक्तिर्यथा अग्निनोष्णेन पर्वतो युक्तः इयमेव विपर्ययेनोत्तरपदाक्षिप्तोक्तिः। वाक्येऽपि विध्याक्षिप्तनिषेधोक्तिर्यथा—बहिरस्ति देवदत्त इत्युक्त्वा गेहे नास्तीति जीवन् गेहे नास्तीत्युक्त्वा बहिरस्तीति निषेधाक्षिप्तविध्युक्तिरित्यादि[1] ॥ १५ ॥

**[2]विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम्।**

परिषदेति विज्ञाने कर्त्तारं निर्दिशता प्रतिवादिज्ञानमविवक्षितमिति दर्शितम्। तदभ्युपगममात्रन्तु विवक्षितम् अनभ्युपगमेऽज्ञानावतारात्। त्रिरभिहितस्यापी-

---

दित्यत्रोदाहरणम् अनित्य इति। नन्विदमप्यर्थपुनरुक्तमेव अभेदेऽप्यविनाभावसत्त्वेनाक्षेपसम्भवात्। मैवम्। अविनाभावपदेन गमकतौपयिकाविनाभावस्य विवक्षितत्वात्। अभेदे चाविनाभावेऽपि तस्य गमकत्वाभावत्वात्। तात्पर्यादित्यत्रोदाहरणम् अनित्यो विनाशीति। नन्वनित्यत्वविनाशित्वयोर्नाभेदः, अन्यथा धूमवत्त्वाक्षेपलभ्याग्निव्याप्यत्वाभिधानस्यापि पौनरुक्त्यापत्तेः। न च सिद्धप्रतिपत्तेरर्थस्य प्रयोजनं विना प्रतिपादनाय पुनर्वचनं पुनरुक्तमिह तु प्रयोजनमस्तीति वाच्यम्, पुनरुक्तस्य प्रकृतप्रयोजनशून्यस्यार्थान्तरविशेषत्वापत्तेः। न। सिद्धसाधनस्य प्रयोजनं विनेति विवक्षितत्वात्। अत एवानुवादस्य भेदः अर्थान्तरत्वस्य सिद्धप्रयोजनत्वाभावात्। अत्र सूत्रेऽभिधेयनिरपेक्षशब्दप्रत्यावृत्तिमात्रेणापि पौनरुक्त्यमस्तीति दर्शयितुं शब्दग्रहणम्। यथा ज-ब-ग ड-द-शेति। निरर्थकावृत्तौ। न च तत्र निरर्थकमेव। क्वचित् सङ्करस्यादोषत्वात्। तथा च शब्दस्यार्थस्य च प्रयोजनं विनोच्चारणं प्रतिपादनञ्च पुनरुक्तमिति सूत्रार्थ इति 'रत्नकोष'कृतः। अत्राहुः—लक्ष्यगतोक्तपदस्य लक्षणगतवचनपदस्य चोच्चारणप्रतिपादनरूपार्थभेदपरत्वे वाक्यभेदापत्तिः। निरर्थकावृत्तौ च निरर्थकमेवासङ्कीर्णमिति। शेषं सुबोधम् ॥ १५ ॥

न च न निरूप्यत्वादस्य सङ्गतिः। अत्रोत्तरविरोधिनिग्रहस्थानचतुष्कलक्षणं प्रकरणार्थः। अभ्युपगममात्रमिति। नन्वभ्युपगमस्य ज्ञाननियमात् प्रतिवादिज्ञानमविवक्षितमित्यनेन विरोधः। मैवम्। प्रतिवाद्यभ्युपगमाविष्कारमात्रं विवक्षितम्। न त्वभ्युपगमोऽपीत्यर्थात् तेनोत्तरत्रानभ्युपगमे अनभ्युपगमाविष्कार इत्यर्थः।

---

1. *NBh.* and *NV.* read another sūtra, namely, 'अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः', between the 14th and the 15th sūtras noted here, which is not found in the *Nyāyasūcinibandha*, *NVT.* and NSV. of Viśvanātha.

2. NS. 5. 2. 16.

त्युच्चारणयोग्यतामात्रप्रदर्शनपरं वादिनेति शेषः। तदनिर्देशस्तु मन्दस्य कदाचित् परिषदाप्यनूद्य दीयत इति सूचनार्थम्। तदयमर्थः—वादिनोक्तस्य परिषदावबुद्धस्य पुनर्वादिना परिषदा वा अनूद्य दत्तस्यापि योग्यस्वस्थेनानवबोधमनाविष्कुर्वता कथामविच्छिंदता अप्रत्युच्चारणमननुभाषणमिति। नञ्द्वयं प्रसज्यपर्युदासवृत्ति, तथा च तदित्यादिसर्वनाम्नानुवादेन वा एकदेशानुवादेन वा विपरीतानु-

---

उच्चारणयोग्यतेति। यावताभिधानेन उच्चारणयोग्यता प्रतिवादिकर्तृप्रत्युच्चारणयोग्यता स्वावबोधानाविष्करणं सम्भवति तावद्वारमभिहितस्येत्यर्थः। तदाविष्कारे त्वज्ञानावतारादित्युक्तम्। योग्यतापरत्वञ्च भिन्नक्रमस्यापि शब्दस्यानवस्थापरत्वेन लभ्यत इति भावः। परिषद्ग्रहणं स्थेयमात्रोपलक्षणम्। तेन तदेकदेशावरुद्धाननुभाषणैकस्थेयकथाननुभाषणयोः संग्रहः। सूत्रे परिषदेत्यस्य विज्ञातस्येत्यनेनान्वितत्वात्त्रिरभिहितस्येत्यत्र कर्त्राकाङ्क्षायामध्याहरति। वादिनेति। सूत्रकृतस्तदनिर्देशे हेतुमाह—तदनिर्देश इति। मन्दस्येति। सभाक्षोभादिना वर्णयितुमक्षमस्येत्यर्थः। अत्र शेषो न देयः। विशेष्यकर्तृनिर्देशेन सामान्यत एव वादिस्थेययोरन्यतरलाभादित्यप्याहुः। परिषदा बुद्धस्येत्यविज्ञातार्थव्यवच्छेदः। पुनरित्यस्य विवादास्पदप्रत्युच्चारणयोग्यतायां तात्पर्यं। योग्यस्वस्थेनेति। योग्यता प्रत्युच्चारणप्रयोजकान्तःकरणपाटवम्। स्वास्थ्यमहिदंशादितात्कालिकदशानापन्नत्वम्। अनवबोधमनाविष्कुर्वतेत्यज्ञानव्यवच्छेदः। कथामविच्छिन्दतेति विक्षेपव्युदासः। अत्र धारणवतामर्थबोधविधुराणामर्थानवबोधाविष्कारेण शब्दमात्रानुवादसम्भवादस्याज्ञानसङ्करः। न च शब्दमात्रानुवादो न युक्तोऽर्थस्य दूष्यत्वे तदनुवादस्यैवार्हत्वादिति वाच्यम्, निरर्थकानुवादाभावप्रसङ्गात्। यत्र चाननूद्य दूषयित्वा कातरतया व्याजेन कथां विच्छिनत्ति तत्रास्य विक्षेपसङ्करः। न चैवमसंकीर्णोदाहरणाभावेन तयोरनिग्रहस्थानत्वम्। यत्र वादिवाक्यं सम्यगनूद्याज्ञानाविष्कारकथाविच्छेदौ, तत्र तयोरसङ्करादिति सङ्कीर्णोदाहरणाव्यापकत्वात् तद्व्यावर्त्तकं विशेषणं न लक्षण इति 'रत्नकोष'कृतः। अत्राहुः—यत्रोदाहरणविशेषे तयोरसङ्करस्तदुदाहरणमात्रपरोऽयं ग्रन्थः। यद्वा, तथापि येन सङ्करस्तद्व्यावर्त्तनायापि लक्षणं विशेषणीयमेव तयोरेतदसङ्कीर्णोदाहरणसम्भवेनैतद्विशेषत्वाभावात्। नन्वेवमेकदेशाद्यननुभाषणासम्भव इत्यत आह—नञ्द्वयमिति। लक्ष्यलक्षणपदगतमित्यर्थः। तथा च प्रत्युच्चारणविरोधिव्यापारो लभ्यते। न च स्तम्भाव्याप्तिः। तत्राप्यनुवादबोधिनः शरीरेन्द्रियावस्थाविशेषस्य सत्त्वात्। एकदेशाधिकप्रत्युच्चारणयोरपि समीचीनप्रत्युच्चारणविरोधिव्यापारत्वान्नाव्याप्तिः। तथाचानुवादयोग्य-

वादेन वा केवलदूषणोक्त्या वा स्तम्भेन वेति पञ्चधा विभाव्यते। न ह्येवमज्ञानमप्रतिभा वा निश्चेतुं शक्यते। ज्ञानसाधनस्यापि स्फुरदुत्तरस्यापि वा कुण्ठत्वेन क्षोभेण वा अननुवादोपपत्तेः। अननुभाषणस्य च योग्यानुपलब्ध्यैव निश्चयात्। ततो निश्चितानिश्चितयोर्निश्चितमेवोद्भाव्यम्। अनिश्चितनिग्रहोद्भावने अतिप्रसङ्गात्। कथमेतन्निग्रहस्थानमिति चेत्, न; अकिञ्चिद्वचने दूषणाश्रयोपादानस्याज्ञत्वाप्रतिपत्तेः केवलदूषणवचने च निराश्रयदूषणं किं दूषयिष्यतीत्यसाधनोपादानाद्विप्रतिपत्तेः। असाधकमनैकान्तिकत्वादिति हि तत्। अयथानुभाषणे व्यधिकरणं दूषणमित्येतदपि तथैव। दूष्यैकदेशानुवादेऽपि तादृगेव। न ह्येकदेशदूषणे समुदायो दूषितः स्यात्। तथाचैन्द्रियकत्वस्यानैकान्तिकत्वेन दूषणे गुणत्वे सत्यैन्द्रियकत्वादित्येतदपि दूष्येत। सर्वनामानुवादेऽप्यननुवादान्न विशेषः। प्रकृतस्य भूयस्त्वेन सन्दिग्धत्वादिति। न च योग्यतया नियमः दूष्यत्वेन सर्वस्यैव तथाभावात्। नापि दूषणस्वरूपपर्यालोचनया। असिद्धत्वादिना पक्षहेतुदृष्टान्तानामपि दूष्यत्वात्। न च यत्र यत् सम्बद्धं तदेव तच्छब्दवाच्यम्,

---

काले तद्विरोधिव्यापारोऽननुभाषणमिति लक्षणार्थः। एतेन प्रसज्यप्रतिषेधेऽव्याप्तिः। पर्युदासलक्षणाप्रसङ्गश्च युगपदुभयपरत्वे च युगपद्वृत्तिद्वयविरोध इति निरस्तम्। तथा च किञ्चिद्विरोधिव्यापारसत्त्वात्। पर्युदासलक्षणाया अनादित्वात्। न चाधिकानुवाददूषणानुवादयोराधिक्येन पञ्चधात्वं न स्यादिति वाच्यम्, विपरीतानुवाद एव तयोरन्तर्भावात्। अत्र च यत्रैवानेकं तत्रैव सर्वनाम्नानुवादो दोष इति द्रष्टव्यम्। बहूनां प्रकृतत्वे विशिष्य दूष्यानुपस्थापनात्। योग्यतायाश्च वादिनामयोग्याभिधानसम्भवेनानियामकत्वात्। ननु स्तम्भेऽज्ञानाप्रतिभयोरन्यतरमुद्भाव्यतां किमनेनेत्यत आह—न हीति। ज्ञानसाधनस्येत्यत्र ज्ञानानुपपत्तिः। स्फुरदुत्तरस्यापीत्यप्रतिभोद्भावनानुपपत्तिर्दर्शिता। कथमिति। अननुभाष्यापि सम्यक्साधनमभिदधानस्याप्रतिपत्तिविप्रतिपत्त्योरभावादित्यर्थः। प्रातिलोम्येन पञ्चानां निग्रहस्थानत्वमुपपादयति। अकिञ्चिदिति। अज्ञत्वप्रतिपत्तौ हि योग्यः स्वस्थः किमिति दूषणं तदाश्रयं नोपाददीतेत्यर्थः। निराश्रयमिति। आश्रयासिद्धमित्यर्थः। नन्वाश्रयासिद्धत्वमनुमानस्य दूषणं न तद्दूषणस्येत्यत आह— असाधकमिति। तथैवेति। व्यधिकरणत्वेनापक्षधर्मतयाऽसिद्धमेवेत्यर्थः। तादृशमेवेति। व्यधिकरणत्वेनासिद्धमेवेत्यर्थः। ननु मा भूद्योग्यतया नियमो वस्तुगत्या यद् दूष्यन्ते, नैव प्रकृतदूष्येऽपि दूषणान्वयो भविष्यतीत्यत आह—नापीति। तथापि येन दूषणं

असम्बद्धभाषणस्यापि सम्भवात्। न हि तेन सम्बद्धमेव वक्तव्यमिति नियमोऽस्तीति ॥ १६ ॥

## [1]अविज्ञातं चाज्ञानम्।

परिषद्विज्ञानवादित्रिरभिधानानुकर्षणार्थश्चकारः। तेन वादिनोक्तं परिषदा बुद्धं पुनर्वादिना परिषदा वा अनूद्य दत्तमपि प्रतिवादी न चेज्जानीयात्तदाऽज्ञानं तस्य निग्रहस्थानम्। एतच्च न बुध्यते मया किमनेनोक्तमित्यभिधाय तिष्ठासोरिष्यते। एवम् अननुभाषणादस्य भेदः अनवबोधमनाविष्कुर्वतो ह्यनुवादावसरः, अवसरे हि क्रियाभ्रंशो दोषाय। अन्यथानुच्यमानदशायामननुभाषणोद्भावनप्रसङ्गात्। तस्मादबोधं विभाव्य तिष्ठासोर्नाननुभाषणावसरः। अतएव, नाप्रतिभेत्यज्ञानमेवावशिष्यते। अविज्ञानं येन तस्याज्ञानमिति सूत्रार्थः ॥१७॥

---

संबध्यते तेनैवान्वयो भविष्यतीत्यत आह—न चेति। न हीति। वादिनो नासत्वेन प्रमादस्यापि सम्भवात्। अन्यथाविरोधादिकमपि नोद्भाव्येतेति भावः ॥ १६ ॥

वादिना त्रिरभिहितस्येत्युपलक्षणम्। पूर्वसूत्रे परिषदापि मन्दस्यानूद्य दानस्य व्यवस्थितत्वात्। अननुभाषणाद् भेदकमाह—एतच्चेति। एतदुपपादयति—अनवबोधमिति। अन्यथेति। अननुभाषणात् प्रागपीत्यर्थः। अतएवेति। अबोधाविष्कारादित्यर्थः। अप्रतिभायाश्चानुवादोत्तरकालीनत्वात्। अबोधमनाविष्कुर्वत उत्तरं श्रोतुं साकाङ्क्षे सभ्यादौ सति उत्तराप्रतिपत्तेरप्रतिभात्वात्। ननु 'क्त'प्रत्ययस्य भावानुशिष्टत्वेन साध्यावैशिष्ट्यमित्यत आह—अविज्ञानमिति। तथा च, कथायां प्रकृतविषये स्वाज्ञानाविष्करणमज्ञानमिति लक्षणार्थः। न चाज्ञानाविष्कारस्य साधनदूषणयोरनुपयोगादर्थान्तरमेवेदं स्यादिति वाच्यम्, अर्थान्तरे कथाविच्छेदो मा भूदिति येन केनापि रूपेणान्वयप्रतीतिरुद्देश्या, अत्र तु तदभावः। केचिदननुभाषणलक्षणेऽनवबोधमनाविष्कुर्वतेति, विशेषणस्य वैयर्थ्येनाप्रवेशात् न तदसाङ्कर्यमिति मन्यमाना यत्र दैवादनूद्य दूषयित्वा परप्रबोधकातरस्य यथोक्त्या, न च बोधाभाव उन्नीयते तादृगुक्तिसम्भवेऽस्यासङ्करः। न हि तत्राननुभाषणमप्रतिभा वा सम्भवतीत्यूचुः। अन्ये तु यत्रार्थमज्ञात्वा मेधावितया शब्दमात्रमनूद्य स्वज्ञानमाविष्करोति तत्रास्याननुभाषणासङ्कर इति वदन्ति। तन्न। शब्दस्यादूष्यत्वेन तदनुवादेऽप्यननुभाषणादर्थस्यैव दूष्यत्वात् ॥ १७ ॥

---

1. NS. 5. 2. 17.

## [1]उत्तरस्याप्रतिपत्तिरप्रतिभा ।

अनुवादानन्तरमेवैतदुद्भावनावसरः । अन्यथा अतिप्रसङ्गात् । तदा हि नाज्ञानमुद्भाव्यं सन्दिग्धत्वात् । स्वयमनाविष्काराच्च । नाननुभाषणं, तस्य तत्क्रिययैवापास्तत्वात् । न विक्षेपः, कथाविच्छेदव्याजानुक्तेः । नार्थान्तरं, प्रसक्तानुप्रसक्तेरभावात् । नापार्थकम् , अनुक्रमेणान्वयाग्रहणादिति । एतस्यां वेलायामवहितायां परिषदि वादिनि च श्रोतुमेकताने प्रतिवादी यद्युत्तरमददानः श्लोकं पठेत् केशादिकं वा समारचयेदाकाशं वा सूचयेद्राजवार्त्तां वावतारयेद् , यद्वा तद्वा कुर्यात् सर्वथाऽप्रतिभया निग्राह्यः । अन्यत्राहिदंशापस्मारभूतावेशोन्मादादिभ्यः । सत्साधने चेयमसङ्कीर्णा, अन्यत्र पर्यनुयोज्योपेक्षणसहचारिणी अनुद्भावितापि चेयं निग्रहाय । यथायथं स्मितस्वेदादिनापि

---

अननुभाषणाद् भेदकमाह—अनुवादेति । सन्दिग्धत्वादिति । परज्ञानस्य परायोग्यत्वादिति भावः । अनुक्रमेणेति । यत्रोपक्रान्तवचसि प्रकृतान्वयो न गृह्येत, तत्रैवापार्थकमित्यर्थः । श्लोकमिति । ननु श्लोकपाठ-राजवार्त्तावतारणादर्थान्तरम् । न च वाद्यभिधानान्नार्थान्तरम् । प्रथमकक्षायां वाद्यभिधानेऽर्थान्तरत्वापत्तेः । अर्थान्तरलक्षणेऽवधानस्य हेत्वभावेन विशेषणत्वायोगाच्च । किञ्चोत्तराप्रतिपत्तिर्यद्यप्रतिभा, तदा स्फुरदुत्तरस्यापि श्लोकादिपाठसम्भवादव्याप्तिः । अथोत्तरानभिधानमात्रं विवक्षितं तथाप्यनूद्योत्तरमनभिदधानस्य न्यूनमेव स्यात् । न चोपजीव्यत्वेनाप्रतिभायाः पृथग् दोषत्वम् , श्लोकपाठादिना न्यूनत्वोन्नयनादिति वाच्यम् ; योग्यस्योत्तरस्यानुपलम्भेनैव न्यूनत्वोन्नयनात् । अत्राहुः—यथाकथञ्चित् परकीयप्रतीतिपरवाक्यप्रयोगो न स्वाज्ञानविरोधित्साया अभावान्नार्थान्तरम् । अन्यथाऽपार्थकस्याप्यर्थान्तरत्वापत्तेः । कथोपगमानन्तरमेव किञ्चिदभिधाने चास्य न्यूनासङ्करः । न हि तदा न्यूनम् । एकदेशस्यानभिधानात् । तथा चोत्तरावसरे उत्तरविषयाज्ञानोन्नायकव्यापारोऽप्रतिभेति लक्षणम् । सूत्रे च'प्रतिपत्ति'पदं तदुन्नायकव्यापारोपलक्षणम् । यद्वा, नञा पर्युदासवृत्त्या प्रतिपत्तिविरोधी कथकव्यापारोऽभिधीयते । तेनोत्तरावसरो तद्विरोधी कथकव्यापारोऽप्रतिभेति लक्षणम् । न च श्लोकपाठादिना स्फुरदुत्तरस्यापीति नाप्राप्तिः । सत्साधने चेति । यद्यपि सत्साधनेऽपि पर्यनुयोज्योपेक्षणसहकृतत्वमस्याः, यथा बहूनि साधनानि वक्तव्यानीति समयोपस्थितौ प्रकृतकथायां साधनान्तरसम्भवेऽप्येकतरसाधनप्रयोगेऽनुत्कृष्टत्वं, तथापि प्रायिकत्वेनैतदुक्तमिति साम्प्रदायिकाः ।

---

1. NS. 5. 2. 18.

सुव्यञ्जितत्वात् । कथाविरामेण तिरोधानासम्भवाच्च । अतो नैतस्यामक्षरैरनुद्भावितायामपि पर्यनुयोज्योपेक्षणमस्तीत्याचार्यदेशीयाः ॥ १८ ॥

**[1]कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ।**

सम्भूय प्रतिज्ञानन्तरं प्रवृत्तायां कथायामद्य मया न वक्तव्यमिदं मे करणीयमस्ति श्वः परश्वो वा वदिष्यामीति व्याजोत्तरं विक्षेपः । नात्र वादिवचनं नावधत्ते, न वाप्रतिभायां व्याजोत्तरमस्तीति भेदेनोपन्यासः, लोकप्रसिद्धेरनुरोधादिति । प्राप्तावसरस्य हि स्वस्थस्य वृथाचेष्टाभिरशक्तिरुन्नीयते, व्याजोत्तरेण वेति लोकप्रसिद्धोऽयमर्थः । अत्र च ताम्बूलभक्षणोद्गिरणप्रस्तावोच्चाराद्यावश्यकमनुष्यधर्मा न व्याजतामुपयान्ति । सर्वप्राणिसाधारणतया सम्भावितत्याऽपकर्षासूचकत्वात्, कथाविच्छेदाहेतुत्वाच्च । कथारम्भादारभ्य समाप्तिपर्यन्तमस्यावसरः । अवश्योद्भाव्यश्चैतत् । अन्यथाङ्गीकारप्रसक्तावतिप्रसङ्गेनापर्यवसानादिति ॥ १९ ॥

---

ननु वागन्तरेण तिरोधानान्न स्वेदादिव्यञ्जितत्वमित्यत आह—कथाविरामेणेति । प्रकृताज्ञानादेव कथाविरामेण न वागन्तरात्तिरोधानमित्यर्थः । आचार्यदेशीया इति । किमयं स्वेदादिना व्यञ्जितत्वात् तूष्णीमास्ते किं वाऽजानान एवेति स्थेयसंशयस्थितावुत्कृष्टानुत्कृष्टत्वनिश्चयाभावान्निग्रहस्थानान्तरवदनुद्भावने स्वशक्तिपराशक्त्यनुन्नयनेऽवश्योद्भाव्यत्वाच्चेत्ययुक्तपक्षाभिधायित्वेनाचार्यदेशीयत्वमिति ॥ १८ ॥

अप्रतिभाया इव विक्षेपस्यापि कथानिरूप्यत्वेन तदनन्तरं विक्षेपलक्षणम् । सम्भूयेति । कथकसभ्यानुविधेयैर्मिलित्वेत्यर्थः । व्याजोत्तरमिति । अतथाजानतस्तथात्वज्ञापको व्यापारो व्याजः । तद्रूपमुत्तरं विक्षेपो विक्षेपणम् । प्रकृतकालात् कालान्तरनयनमिति यावत् । ननु चाप्रतिभैव किं न प्रकृता स्यादित्यत आह—नात्रेति । न ह्यवधानस्याप्रतिभाधर्मस्याविक्षेपे सम्भव इत्यर्थः । न चाप्रतिभायां विक्षेपधर्म इत्यत आह—[2]न वेति । कथमनयोर्भेदेन निग्रहस्थानत्वमित्यत आह—[3]लोकेति । तामेव विशदयति—प्राप्तावसरस्येति । वृथाचेष्टाकेशरचनाद्यतिव्याप्तिं निराकरोति—अत्रेति । अतिप्रसङ्गेनेति । व्याजोत्तरपरम्पराया दुरुच्छेदत्वादित्यर्थः । अत्रोभयानुमत्या प्रकृतकथायां व्याजेन कथाविच्छेदनं विक्षेप इति विक्षेप-

---

1. NS. 5. 2. 19. 2. MS. 'न चेति'. 3. MS. 'कैति'.

[1]स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ।

अत्र पक्षः सिद्धान्तः, दोषः प्रतिकूलतामात्रम्, अभ्युपगमोऽनुद्धारः। तेन स्वसिद्धान्ते परोक्तं प्रतिकूलमनुद्धृत्य परसिद्धान्ते प्रतिकूलबुद्ध्या इष्टप्रसङ्गो मतानुज्ञेति सूत्रार्थः। तेन साधनदूषणयोर्मतानुज्ञासंग्रहः। कुतः पुनरियं न जातिः? विशेषलक्षणायोगेन चतुर्विंशत्यामनन्तर्भावात्। प्रतिषेधा-

---

लक्षणम्। अतो न कथोद्देशादपसरतो विक्षेपाद्यव्याप्तिः। तत्राभिधानव्यतिरेकेऽपि तथा चेष्टायां व्याजत्वात्। ननु व्याजोत्तरस्य प्रकृतानुपयुक्तत्वेनार्थान्तरत्वं यथायथमप्रतिभान्यूनाननुभाषणसङ्करश्च। अत्राहुः—किञ्चित् प्रकृतमेव साधयामीति प्रकृतार्थपरतया स्वाज्ञानतिरोधित्सया अभावेन नार्थान्तरत्वम्। कथाव्यवस्थानानन्तरमेव व्याजेनास्याप्रतिभाद्यसङ्करः न हि तदाऽप्रतिभा, उत्तरावसराभावात्। न न्यूनमकिञ्चिदभिधानात्। नाप्यननुभाषणमनुभाष्याभावेनावसराभावादिति ॥ १९ ॥

कथानिरूपकाभ्युपगमनिरूप्यत्वेन सङ्गतिः। दोषनिरूप्यनिग्रहस्थानत्रिकलक्षणं प्रकरणार्थः। अत्र सूत्रेषु स्वपक्षविवक्षायां यत्र वादिना 'त्वं चोर' इति स्थापनायां 'त्वमपि चौर' इत्युत्तरं तदव्यापकं प्रतिवादिनः पक्षाभावात्। हेत्वादिदोषाभ्युपगमो व्यापकत्वं दोषस्योत्तरविशेषरूपतया स्थापनाविषयाभिमाने पूर्वोदाहृते चाव्यापकमित्यत आह—अत्रेति। अभ्युपगमेनाभ्युपगन्तव्यस्यावश्योपस्थितौ तन्मात्रस्यैव प्रयोजकत्वादिति भावः। मुख्यार्थपरित्यागे फलमाह—तेनेति। तथा च कथायां स्वाभ्युपगतस्य दुष्टत्वस्वीकारो मतानुज्ञेति लक्षणम्। यत्र सम्पूर्णमुक्त्वा दुष्टोऽयं मम पक्ष इत्यनध्यवसायाद्वदति तत्रास्त्यस्यासङ्करः। न हि हेत्वाभासो नाप्रतिभादि। यद्वा, इष्टापादनं मतानुज्ञेति तात्पर्यम्। न च निरनुयोज्यानुयोग इति वाच्यम्; यत्र प्रथमकक्षायां स्थापनानुकूलतयाऽनिष्टभ्रमेणेष्टमापादयति तत्र मतानुज्ञायामसङ्करात्। तर्हि शिथिलमूलादयोऽपि तर्काभासाः पृथक् निग्रहस्थानानि स्युरिति वाच्यम्; व्याप्यत्वासिद्ध एव तदन्तर्भावात्। न चेष्टापादनस्यापि विपर्ययापर्यवसाने न तत्रैवान्तर्भावः स्यादिति वाच्यम्; विपर्ययापर्यवसानेऽपीष्टत्वस्योपजीव्यत्वेन तस्यैवादोषत्वात्, तदनाकलनेऽपीष्टापादकत्वेनैवाशक्तिसूचकत्वाच्च। प्रसङ्गाभासमात्रं मतानुज्ञातेनात्माश्रयान्योन्याश्रयचक्रकानवस्थाभासानामनुकूलादिपञ्चकानाञ्च संग्रहो न हि तेषामन्यत्रान्तर्भाव इति 'रत्नकोष'कृतः। अथ विप्रतिषेधासमर्थत्वान्मतानुज्ञा कथं न जातिरिति पृच्छति—कुत इति। उत्तरम्, विशेषेति। ननु सामान्यलक्षण-

---

1. NS. 5. 2. 20.

समर्थप्रसङ्गमात्रतया सामान्यलक्षणयोगेऽपि पञ्चविंशतितम्या असत्कल्पत्वात्। कथाप्रयोगेऽप्युद्भावनानर्हत्वात्। असामर्थ्योद्भावनेन हि जातित्वमुद्भाव्यते, तच्च प्रकृते दुर्घटम्। यदा खलु पुरुषत्वाच्चेदहं चौरः तत एव भवानपीत्युक्ते प्रतिब्रवीति चौरत्वे पुरुषत्वमनैकान्तिकमप्रयोजकं वा कथमेतस्मादहं चौरः स्यामिति तदा स्वोक्तमप्यनेन दूषितं स्यात्। ततः स्वरूपतो जातित्वेऽपि प्रत्युत्तरजात्युद्भावनं न सम्भवतीति जातित्वं सदप्यसत्कल्पमेव, मतानुज्ञोद्भावने तु न कश्चिद्दोष इति तदवकाशः। एवं हि प्रतिब्रूयात् काममहमपि चौरः किमेतावता न ह्येकमिन्धनमग्निसम्बन्धाद्दग्धमित्यन्यन्न दह्यते तद्दाहे वा पूर्वस्य दग्धत्वं निवर्त्तत इति। न च प्रसङ्गोऽयम्। प्रसञ्जनीयस्यानिष्टत्वासिद्धेः। अत एव न व्याघातदेशनेयम्, आत्मनः पुरुषत्वेऽप्यचौरत्वमभ्युपगम्य परस्यापादयतो हि सा स्यादिति। उत्कर्षानित्याविशेषसमा अप्येवं परिहरतः को दोषः? तथा च तासामपि मतानुज्ञायामनुप्रवेश इति चेत्, न; प्रसञ्जनीयस्याभ्युपगमेन हि मतानुज्ञोद्भावनमिष्यते, अन्यथा अनिष्टप्रसङ्गेनैवोत्तरनिर्वाहे तदुद्भावकस्य निरुत्तरत्वप्रसङ्गात्।

---

योगबलेनैव त्रयोविंशतिलक्षणहीनत्वेऽपि चतुर्विंशतिलक्षणायोगेऽपि पञ्चविंशतितमी जातिः स्वीकर्त्तुमुचितेत्यत आह—तच्चेति। अप्रयोजकं चेति। परद्रव्यापहारकत्वस्योपाधित्वादित्यर्थः। स्वोक्तमिति, स्थापनावाक्यम्। तत इति। वस्तुगत्या जातित्वं सदपि तृतीयकक्षास्थिते नोद्भावनासम्भावनानादृतमित्यर्थः। ननूद्भावनानर्हत्वेऽपि न जातिसामान्यलक्षणाभावः। न च जातित्वेऽपि मतानुज्ञाया उपजीव्यत्वेन सैवोद्भाव्या, असामर्थ्यस्येष्टापादनरूपतर्काभासेनोन्नेयत्वादिति वाच्यम्; सर्वत्र जात्युन्नायकस्यैवोपजीव्यत्वेन दूषकत्वे जातेरदूषणत्वापातात्। मैवम्। न हि प्रयोक्तुरनिष्टापादनासामर्थ्यमेव जातिसामान्यलक्षणम्। अपि तु, तस्यैवोत्तरस्य तदुत्तरव्याघातकत्वम्। यदि चास्य स्वचौरत्वमिष्टमेव, तदा व्याघातमपि नाभ्येति, कथं तथोच्यतां तथात्वे वा तदुद्भावनयोग्यत्वे न जातिसामान्यलक्षणं विशेषणीयम्। एतेन जातिसामान्यलक्षणयोगान्मतानुज्ञा, जातित्वे तद्विभागसूत्रव्याघात इति निरस्तम्। आक्षिपति—उत्कर्षेति। उत्कर्षसमादिष्वपीष्टापादनस्यापरिहरतो मतानुज्ञा स्यादित्यर्थः। समाधत्ते—प्रसञ्जनीयस्येति। परप्रसञ्जितोऽर्थो यत्र शक्याभ्युपगमस्तत्र तमङ्गीकृत्य मतानुज्ञोद्भावनम्। यत्र तु तदभ्युपगमस्यापसिद्धान्तापत्तेरशक्यता तत्रानिष्टापादनतयोत्तरनिर्वाहान्न निग्रहस्थानत्वमित्यर्थः। अन्यथेति। प्रसञ्जितस्यानिष्टतयाऽनभ्युपगम इत्यर्थः। 'तदुद्भावकस्ये'ति प्रायिकम्। तृतीयकक्षापतितस्य वादिन एव मतानुज्ञोद्भावकत्वात्। ननु प्रसङ्गमात्रेण नोत्तर-

अनिष्टप्रसङ्गो हि दूषणमेव प्रतिकूलदेशनाद्व्याघाताद्वेति। न चालापादिताभ्युपगमः शक्यः, न हि कार्यत्वात् क्षित्यादिकं सकर्तृकं शरीरपूर्वकमप्यस्त्वित्युक्ते काममप्यस्त्वित्युत्तरमुचितमपसिद्धान्तप्रसङ्गात्। तथा घटसाधर्म्याद् यद्यनित्यः शब्दः, सत्त्वात्तत्साधर्म्यात् त्रैलोक्यमेवानित्यमवशिष्टं वास्तु नवानां द्रव्यत्वादविशेषोऽस्त्वित्यादौ काममस्त्वित्युत्तरमिष्टम्। इष्टत्वे वाऽपसिद्धान्तः स्यात्। तस्मादसमर्थत्वाविशेषेऽपि यत्र मतानुज्ञोद्भावनप्रसञ्जनाभ्युपगमः, तदभ्युपगमेऽपसिद्धान्तो वा तत्र जातित्वमेवोद्भाव्यम्, यत्र च जातित्वोद्भावनमात्मानमपि व्याप्नोति प्रसञ्जितस्याभ्युपगमोऽपि निर्दोषः तत्र मतानुज्ञेति। तथा च साधुन्यसाधुनि वा साधने दूषणे वा प्रयुक्ते यदनिष्टभ्रमेणेष्टप्रसञ्जनं सा मतानुज्ञेति संक्षेपः। तत्र साधने तावदुच्यते—शब्दोऽनित्यः कार्यत्वादैन्द्रियकत्वात् घटवदिति सदसत्प्रयोगे यदि ब्रूयात्तद्वदेव तर्हि मूर्तोऽपि स्यादिति वा घटसाधर्म्यात् सत्त्वात्त्रैलोक्यमेवानित्यमस्त्विति वा तदा जातिरेवोद्भाव्या मतानुज्ञायाः प्रसङ्गाविष्कारेणैव तिरोभावात्। यदाप्यैन्द्रियकत्वादित्यत्र प्रत्यवतिष्ठते तर्हि तत एव सामान्यमप्यनित्यं स्यादिति; तदा सदुत्तरमेव। कथमस्यानिष्टतया तत्र प्रसङ्गेन साधनस्य प्रतिकूलतर्कप्रतिहतत्वात्। इष्टत्वेऽपसिद्धान्तात्। तदविनाभूततयास्वीकृतस्याप्यैन्द्रियकत्वस्य तेन विना स्वीकारे व्याघाताच्चेति। यदि पुनर्घटोऽपि तर्हि तत एवानित्योऽस्त्विति ब्रूयात्तदा मतानुज्ञोद्भाव्या प्रसञ्जितस्यैवेष्टत्वात्। जात्युद्भावनस्य चाशक्यत्वात्। साधुन्यसामर्थ्याभावात्। असाधुन्यसामर्थ्याविष्करणेन स्वोक्त-

---

निर्वाहः, तस्यारोपितहेतुसमुत्थत्वात् गमकतौपयिकरूपवतामनैकान्तिकत्वादीनामेवोद्भावनस्य तथात्वादित्यत आह—अनिष्टेति। इष्टप्रसञ्जने हि तर्काभासत्वम्। न चात्र तथाऽपसिद्धान्तापातादित्युक्तमित्यर्थः। व्याघातं विवृणोति—न हीति। तत्रोत्कर्षसमादौ त्रैलोक्यमेवानित्यमित्यनित्योदाहरणम्। शेषमविशेषसमोदाहरणम्। सूत्रतात्पर्यमाह—साधुनीति। सदसदिति। कार्यत्वैन्द्रियकत्वयोर्यथासंख्यं 'मूर्त्तोऽपी'त्युत्कर्षसमा 'त्रैलोक्यमेवा'नित्यसमाश्रयतया सहान्तर्भावादविशेषसमोदाहृता। प्रसङ्गाविष्कारेणेति। अपसिद्धान्तपर्यवसायिस्वीकारे विषयापादनेनेत्यर्थः। अनिष्टापादनतया व्याघातमाह—तदविनाभूतेति। ऐन्द्रियकत्वादनित्यत्वं साधयत ऐन्द्रियकत्वानित्यत्वयोरविनाभावमङ्गीकुर्वतः सामान्यस्यैन्द्रियकत्वेऽपि नित्यत्वाभ्युपगमेन व्याघात इत्यर्थः। जात्युद्भावनाशक्यत्वे हेतुमाह—साधुनीति। असामर्थ्याविष्कारेण हि जातित्वोद्भावनमिष्यते। तत्र

स्यापि दूषणप्रसङ्गादिति। एवं दूषणेऽप्यूहनीयम्। अनिष्टत्वेन निश्चितमेव परस्य प्रसञ्जयेदिति रहस्यम् ॥ २० ॥

## [1]निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम्।

विजातीयप्राप्ताविदमिष्यते। न ह्युपेक्षणस्याप्युपेक्षणं निग्रहाय, अनवस्था-प्रसङ्गात्, प्रयोजनाभावाच्च। अनेकसन्निपाते चैकतमोद्भावने अन्यानुद्भावनं न तन्निग्रहाय, तावतैव प्रकृतसिद्धेः। तदुद्भावनेऽधिकत्वप्रसङ्गाच्चासमस्तोद्भावनप्रतिज्ञाने

साधौ स्थापनाहेतावुपन्यस्ते साध्ये व्याप्यतया हेतोरसामर्थ्याभावे तदुद्भावनमशक्यम्। असाधौ तु तदाविष्कारे स्वोक्तमप्यनेन दूषितं स्यादिति जातित्वोद्भावनमशक्यमित्यर्थः। साधने दूषणे चेत्युपक्रमात् साधनोक्तरूपं दूषणेऽप्यतिदिशति—एवमिति। केचित्तु स्वपरसाधारणप्रतिवन्दि(बन्धि?)वचनं मतानुज्ञा यथा येनैव शशशृङ्गं प्रतिवन्दि(बन्धि?)ना ईश्वरानुमाननिरासस्तेनैवातीन्द्रियमात्रानुमाननिराकरणमिति ॥ २० ॥

मतानुज्ञाया उद्भावननिरूप्यत्वात्तदनन्तरं लक्षणम्। विजातीयेति। विजातीयनिग्रहस्थानप्राप्तावित्यर्थः। [2]अनवस्थानादिति। एतस्य पर्यनुयोज्योपेक्षणम्, आपतिते तस्य सत्येकोद्भाव्यस्यानुद्भावनपरस्यापि तदा पतितं तदपि तेन पूर्व-वदुपेक्षितमित्येकतरवादिनिग्रहस्थानपर्यवसानमनवस्थानान्न शक्यावधारणमिति। पर्यनु-योज्योपेक्षणं निग्रहस्थानप्राप्तावुपेक्षणं न निग्रहस्थानायेत्यर्थः। ननु प्राप्ताव-वसरानाशङ्कित एव चरमदोषस्तथोद्भावन एव कथापर्यवसानात् क्वानवस्थानम्। किञ्च, वादे वादिसमूहकर्त्तृकायाञ्च क्रियायां पर्यनुयोज्योपेक्षणस्यापि वाद्युद्भावनस्यापि सिध्यत एव स्वकौपीनविवरणानुचितावरणरूपदोषस्य तत्राभावात्। तथा च तदुपेक्षा तत्र दोष एव तदुद्भावने च कथाविरामात्। एकस्य पर्यनुयोज्यतयाऽन्यस्य तदुपेक्षक-तयैवासाधकत्वात्। अत्राहुः—उपेक्षणोपेक्षणस्यादोषत्वेनोद्भावनमसम्भाव्यम्। तदु-द्भावनाद्युपेक्षाविषयदोषोद्भावनस्यावश्यकत्वेनैव च चरितार्थत्वम्। वादे चोपेक्षांशोद्भावन-वैयर्थ्यम्। वादिसमूहकथायां च पक्षभेदकथाभेद एव तदभेदे च स्वादोषोद्भावनापत्तिर-विशेषात्। प्रयोजनाभावाच्चेति। पर्यनुयोज्योपेक्षणोद्भावनप्रयोजनं नास्ति। आद्येनैव पर्यनुयोज्योपेक्षणेन द्वयोः शिथिलीकरणादित्यर्थः। न त्वनेकनिग्रहप्राप्तौ तावतः सर्वस्यो-द्भावनं कर्त्तव्यम्। अन्यथा पर्यनुयोज्योपेक्षणप्रसङ्ग इति तावन्निग्रहनिरूपणे कथास्वरूपमेव न निष्पद्येतेत्यत आह—अनेकेति। प्रकृतमुपन्यस्य स्वप्रमाणे साधुत्वासाधुत्वनिरूपणं

1. NS. 5. 2. 21. 2. NP. Text. 'अनवस्थाप्रसङ्गात्'.

तु तथा स्यादेव। पुरःस्फूर्त्तिकानधिकृतोद्भावितस्याग्रहणं न निग्रहाय। तदुक्तेरफलत्वेनानुक्तेरुचितप्राप्तत्वात्। प्रतिक्रियासंवृतस्याप्येवं यथा नाहमद्य वक्तुं समर्थः प्रतिश्यायाकर्मण्यकण्ठत्वादित्युक्त्यैव तथाप्यारब्धत्वादुच्यत इति विक्षेपो व्यावर्त्तते। तस्मादवश्योद्भाव्यस्य निग्रहस्थानस्यावसरेऽग्रहणं पर्यनुयोज्योपेक्षणमिति सूत्रार्थः, प्राप्तपर्यनुयोज्यशब्दयोरर्हदर्थत्वात्। सभ्योद्भाव्यं चैतत्। अथाप्रतिभायां कुत इदं पृथगनुशिष्यते? असत्साधनविषयत्वादिति चेत्, किमनेन विशेषणेन? अनधिकप्रयोजनकत्वात्। न प्रतिज्ञाहानिप्रतिज्ञासंन्यासादौ तदुपेक्ष्य सदुत्तरेणापि प्रत्यवस्थाने अस्यावकाशात्। अप्रतिभायास्तत्राभावात्। ननु सदुत्तरं वदन् प्रौढतया क्षुद्रस्खलितं यद्युपेक्षितवान् किमेतावतैव निग्रहमर्हति? अर्हत्येव प्रतिज्ञासंन्यासादीनामवश्योद्भाव्यत्वात्। अन्यथा पूर्वोपात्तं दुष्टं त्यजन् विशेषयन्नपह्नुवानो यद्युपेक्ष्येत कथमपि कथाप्रतानविच्छेदो न स्यादिति ॥ २१ ॥

---

—तदुक्तेरिति। पुरःस्फूर्त्तिकानधिकृतोद्भावितनिग्रहोक्तेरित्यर्थः। वादिनेत्यर्थात्, अफलत्वन्तु साधुत्वासाधुत्वनिर्णय इति भावः। टीकाकृतः समाधिं शङ्कते—असदिति। निराकरोति—किमनेनेति। उत्तरलम्भासामर्थ्यसूचनमात्रस्योभयत्राविशेषादन्यथान्येषामपि सदसत्प्रयोगविषयत्वे तद्वैगुण्यापत्तिरित्यर्थः। प्रतिज्ञेति। आपतितेऽपीति शेषः। नन्वत्र निरनुयोज्यानुयोग एव तदसाधारण्येन निरनुयोज्यत्वात्। एवं सदुत्तरमुपेक्ष्यासदुत्तरं यत्र ब्रूते, तत्रापि निरनुयोज्यानुयोगः। नापि स्तम्भोपेक्षणेऽप्रतिभोपेक्षणे वाऽस्यासङ्करः। न हि दूषणाप्रतिपत्तिमात्रमप्रतिभाप्रथमकक्षापतितत्वाभावप्रसङ्गात्। अपि तु वचनावसरे वचनाप्रतिपत्तिः। न चात्रापि। अत्राहुः—साधनदूषणसमाधानरूपत्रिपर्वणि कथायां साधनदूषणाज्ञानेऽप्रतिभादूषणे समाधानाभासवादिनं यत्रोपेक्षते, तत् पर्यनुयोज्योपेक्षणमिति। कथाप्रतानेति। नन्वनेकनिग्रहस्थानपाते यथैकतरतदुद्भावनं दोषाय तथा प्रतिज्ञाहान्यादिसमानसमयानेकनिग्रहस्थानपातेऽप्येकतरनिग्रहस्थानोद्भावनस्यादुष्टत्वम्। तथा च पूर्वोपात्तेत्युक्ते विशेषेऽपलपिते वा यदि निग्रहस्थानान्तरेणापि निगृह्यते, तथापि कथाविच्छेदो भवत्येव वाद्युत्थापिताकांक्षस्याविष्कारविशेषादेव कथाविच्छेदात्। अन्यथा प्रतिज्ञाहान्याद्युद्भावनेऽपि प्रतिज्ञाहान्यादेरेव निग्रहस्थानत्वं यदि त्यजेद्विशेषयेदपह्नुवीत वा, तदा कः प्रतीकारः? तथापि तथाविधसंप्रतिपत्तिविषयनिग्रहस्थानोपेक्षण एव पर्यनुयोज्योपेक्षणमिति साम्प्रदायिकाः ॥ २१ ॥

[1]अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ।

स चतुर्विधः, छलं जातिराभासोऽनवसरग्रहणञ्चेति । छलमुक्तं जातिश्च । आभासो यथा, अनेककल्पस्फुरणे विकल्पतोऽनिष्टकल्पत्यागेन प्रतिज्ञाहानिः, प्रकरणाद्यापन्नविशेषाविष्करणेन प्रतिज्ञान्तरम् । नञ्प्रयोगाप्रयोगमात्रेण विरोधः । आरोपितानभ्युपगमेन संन्यासः । स्वयमगृहीतस्य विशेषणस्य पुनरुत्कीर्त्तनेन हेत्वन्तरम् । वस्तुतः प्रस्तुतानुगुणेऽप्यापाततस्तथानध्यवसायेनार्थान्तरम् । आत्मनोऽवैयाकरणत्वेन वाचकप्रयोगेऽवाचकत्वाभियोगो निरर्थकम् । आत्मनः परिषदेकदेशस्य वा अनवबोधेनाविज्ञातार्थम् । पौर्वापर्य्ययोगेऽपि स्वयमप्रतिसन्धानेनापार्थकम् । अनवबोधाद्विपर्ययेणाप्राप्तकालम् । अन्यत्र व्यासङ्गादश्रुतेन न्यूनं, पार्श्वस्थाद्युक्तेन हेत्वादिनाप्यधिकम् । श्रुतिसामान्यमात्रेण पुनरुक्तम् । तदप्रसिद्धपदैरनुवादेनाननुभाषणम् । अनवबोधितायामपि परिषदि स्वावष्टम्भमात्रेणाज्ञानाम् उत्तरं वदतोऽपि स्वेदादिना प्रतिभाक्षयः । आवश्यकप्राणिधर्मेण विक्षेपः । सिद्धसाधनेन मतानुज्ञा । अदोषोद्भावनेन पर्यनुयोज्योपेक्षणम् । अच्छलजात्योश्छलजात्युद्भावनेन निरनुयोज्यानुयोगः । अभ्यस्तशास्त्रातिक्रमेणाप्यपसिद्धान्तः । उक्तिमात्रेण हेत्वाभासा इति निग्रहस्थानाभासाः । तथानुयोज्यत्वे प्रतिज्ञाहान्यादौ प्रतिज्ञान्तरादि । छलेऽपि जातिः वाक्छलादावपि च्छलत्वेनोपचारच्छलादि । साधर्म्यसमादावपि जातित्वेन प्रकरणसमादि । अतन्निग्रहस्थानापन्नो हि निरनु-

---

अनुयोगनिरूप्यत्वेन सङ्गतिः । आभास इति । छलस्याभासत्वेऽपि गोवृषन्यायेन विभागः । अनापतितनिग्रहारोप इत्यर्थः । तस्योक्तिसम्भवमाह— अनेकेति । स्वयमिति । प्रतिवादिनेत्यर्थः । [2]पनरुत्कीर्त्तनेनेति । वादिना कृतेनेत्यर्थः । [3]अनवबोधादिति । अत्र 'विपर्ययेणे'त्यनन्तरं नञा रहितं 'प्रतिसन्धानेने'त्यनुषञ्जनीयम् । अभ्यस्तेति । अभ्यस्त'गोतम'मतस्यैवादुष्टस्य 'सौगत'मतमास्थाय कथामारभमाणस्य ईश्वरानभ्युपगमे यस्येत्यर्थः । उक्तिमात्रेणेति । स्वशास्त्रे अनुमानादिदोषत्वेन तस्य हेत्वाभासस्योक्तत्वादसत्यपि तस्मिंस्तदुद्भावनं यथेश्वरानुमाने विरोधादित्यर्थः । तथेति । अन्यनिग्रहापत्तावन्यनिग्रहोद्भावनमपि निरनुयोज्यानुयोगस्य निरनुयोज्यानुयोगत्वाभावादित्यत आह—अतन्निग्रहस्थानेति ।

---

1. NS. 5. 2. 22. 2. MS. '-कीर्त्तनेति'. 3. MS. '-धाना-'.

योज्योऽत्र विवक्षितः। तस्यानुयोगेऽपि तन्निग्रहस्थानोद्भावनमेवं सर्वसंग्रहः, तथा चातन्निग्रहस्थाने तन्निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इति सूत्रार्थः। एतदेव महतः सूत्रस्य प्रयोजनम्, अन्यथात्वनिग्राह्यनिग्रह इति प्रणयेत्। अनवसरग्रहणन्तु यथोक्तावसरमप्राप्यातिक्रम्य वा ग्रहणम्। यथा त्यक्ष्यसि चेत् प्रतिज्ञाहानिः, विशेषयिष्यसि चेत् हेत्वन्तरमिति। अयन्तावदनेन दोषेण हेतुस्ते दुष्ट एवादुष्टो वा तथापि पूर्वस्तावत्त्वया त्यक्त इति हानिः। विशिष्टस्तावदयमदुष्टः पूर्वत्वविशिष्ट एव त्वयोपात्त इति हेत्वन्तरमित्युक्तग्राह्यम्। तथोच्यमानग्राह्यमपशब्दा-

---

यो निग्रह आपद्यमानो वर्त्तते तमप्राप्तस्य तेन निग्रहो निरनुयोज्यानुयोगः स तु वस्तुतोऽविशेषनिग्रहशून्यो वा निग्रहान्तरापन्नो वा भवत्विति न विशेष इत्यर्थः। सूत्रविरोधं व्याख्याय परिहरति—तथा चेति। नन्वेतद्यथाश्रुतमनवसरग्रहणाव्यापकं तत्रावसरमप्राप्य वस्तुतस्तन्निग्रहस्थानापन्नस्यैव तन्निग्रहस्थानाभियोगात्। मैवम्। तन्निग्रहस्थानोद्भावनाभ्युपेतावसरे तन्निग्रहस्थानोद्भावनत्वस्य निग्रहस्थानान्तरेणानुयोगानर्हत्वानुयोगो वा निरनुयोज्यानुयोग इति विवक्षितत्वात्। तेन निग्रहस्थानशून्ये निग्रहस्थानान्तरापन्ने उद्भाव्यमानतद्व्यतिरेके वा निग्रहस्थानत्वानापन्नस्यैव तत्त्वेनाभावेन[1] वेति सर्वसंग्रहः। नन्वाद्येन तच्छब्देन निरनुयोज्यानुयोगो विवक्षितो न वा? आद्ये आत्माश्रयः, अन्त्येऽव्याप्तिः। मैवम्। निग्रहस्थानत्वेन सामान्यतस्तत्परिग्रहे तदभावात्। निग्रहस्थानत्वं च ज्ञातमेव। उक्तार्थे सूत्रतात्पर्यमाह—एतदेवेति। इह निग्रहस्थानानामुक्तग्राह्योच्यमानग्राह्यानुक्तग्राह्यभेदेन त्रैविध्यम्। तत्राद्यं विवेचयति—इत्युक्तग्राह्यमिति। अनवसरग्रहणे यदुक्तं तदित्यर्थः। तथा हि, हानिहेत्वन्तरयोरुक्तग्राह्ययोर्यदैवापातस्तदैवोद्भावनमुचितं यदा तु तं कालमतीत्यान्यमुपाददाति तदा हान्युद्भावनं तदा तद्भवति एवमवसरमप्राप्य ग्रहणमिति भावः। तथेति। अत्रानवसरग्रहण उदाहृत इति शेषः। तथानुक्त[2]ग्राह्यमित्यपि। नन्वपशब्दादिकमप्युक्तिसमाप्तिग्राह्यमेव [3]उच्यमानतादशायामपशब्दादेरशक्यनिश्चयत्वादित्यादिपदैः स्वरूपवत्त्वेनानुवादादिसम्भावनया साधुत्वसन्देहानुवृत्तेः। अन्यथातिप्रसङ्गात्। मैवम्। अर्थपरत्वनिश्चयेन तत्र तादृशसन्देहनिवृत्तिस्तत्रोच्यमानात् तदनिश्चये तु तस्याप्युक्तिसमाप्तिग्राह्यत्वात्। यस्य यदा निश्चयस्तत्तदैवोद्भाव्यम्, प्रवृत्तोद्भावनकालातिक्रमस्याज्ञानापातादित्यभिप्रायात्। अत्रादि-

---

1. MS. '-नेवेति'. 2. MS. '-नुग्राह्य-'.

3. Cp. उक्तग्राह्याः केचिदन्येऽनुक्तग्राह्यास्तथापरे।
उच्यमानदशाग्राह्या इति कालस्त्रिधा स्थितः॥—TR.

द्युक्तिपरिसमाप्तौ अनुक्तग्राह्यमज्ञानाद्यननुभाषणाद्यवसरे सर्वं कक्षान्तरितमिति ॥२२॥

**[1]सिद्धान्तमभ्युपेक्ष्या[2]नियमात् कथाप्रसङ्गोऽपसिद्धान्तः ।**

अभ्युपगतसिद्धान्तातिक्रमेण साधनदूषणयोरभिधानमपसिद्धान्त इत्यर्थः । पुरुषान्तरवाक्येन कथकवाक्यव्याघातरूपत्वादस्य स्ववाक्यव्याघातरूपाद्विरोधाद्भेदः । नन्वत्रापि स्वेनैव पूर्वाभ्युपगमेन व्याघातः ? यदि हि न्यायदर्शनमभ्युपगम्य तत् परिहरेत्, तदाऽयमपसिद्धान्तमासादयेत् । तथास्वीकारपरिहारावेकस्य विरुद्धाविति । न पुरुषान्तरवचनमनुपनीय विरोधस्य साक्षादप्रतीतेः । न हि नैयायिकोऽहमित्यभिधायाभौतिकानीन्द्रियाणीति वचनमिन्द्रियाणि भूतेभ्य इति गौतमवचनमनवतार्य व्याहतं वक्तुं शक्यमिति । एवं तर्ह्यागमविरोधोऽप्यत्रैवान्तर्भवेदिति चेत्, न ; उभयवादिसिद्धप्रमाणभावेन स स्यात् । अयन्तु स्वाभ्युपगममात्रविषयेणेति विशेषात् ।

---

शब्देनाप्राप्तकालविरोधादिकं ग्राह्यम् । अनुक्तेति । प्रथमं सत्यज्ञानवादिवचनायाबोधमाविष्कुर्वता ज्ञानमापतितं तत्तदा नोद्भावितं ततोऽवबोधमाविष्कुर्वतामवभाषणप्रवृत्तेर्वादिजन्यज्ञानोद्भावनं भवत्यवसरमतीत्य ग्रहणम् । उदाहरणमात्रमेतत्, अन्यदप्यूह्यमित्यभिप्रायेणाह—सर्वमिति । ननु नेदं निग्रहस्थानान्तरं जातौ यथायथमनैकान्तत्वादेः छले च नवसंख्यत्वमूलत्वस्य साधने सिद्धसाधनात् । अनवसरग्रहणेनाप्याकाङ्क्षितकालात्ययाभिधानादप्राप्तकालत्वम् । अत्र केचिदाहुः—छलादीनां येन रूपेणाशक्त्युन्नायकत्वं तस्यात्राभिधानं न हि च्छलादिभिश्छलत्वादिनैवाशक्तिसूचनं तेषां बाह्यव्यक्तत्वेन वैयधिकरण्यात् तदुक्तस्य च च्छलान्यत्वात् । अन्ये तु यत्र जल्पादौ तत्त्वनिर्णयविरोधिनिग्रहस्थानमेव परमुद्भावनीयमिति नियमबन्धः कृतस्तत्रान्यनिग्रहस्थानस्यापि प्रतिज्ञाहान्यादेरुद्भावनेऽन्यासङ्कर इति समादधिरे ॥ २२ ॥

हेत्वाभासानां कथावसानिकत्वेन शेषे तदभिधानस्य न्यायप्राप्तत्वेन सङ्गतिः । कथकान्योक्तिं निरूप्य निग्रहस्थानद्वयलक्षणं प्रकरणार्थः । अपसिद्धान्तहेत्वाभासयोः ग्रन्थकारोक्तियथोक्तधा(?)भ्यां निरूपणात् यथाश्रुतं सूत्रमभ्यस्तमात्रसिद्धान्तातिक्रमेऽतिव्याप्तमित्यत आह—[3]अभ्युपेतेति । परिगृहीतसिद्धान्तविपरीतार्थाभ्युपगमोऽपसिद्धान्त इति लक्षणार्थः । विरोधादस्य भेदकमाह—पुरुषान्तरेति । अनुपनीयेति । तथा चोपजीव्यत्वेन पराभ्युपगमविरोधस्य पृथक् दूषणत्वमिति भावः । अत्रैवेति । अत्राप्यागमप्रामाण्याभ्युपगमस्य समीचीनत्वेऽपि तद्विरोधादपसिद्धान्त इति

---

1. NS. 5. 2. 23. 2. '-मभ्युपेत्या-' in all the printed editions of the Sūtra. 3. NP. Text. 'अभ्युपगत-'.

अत एव, बौद्धेन सह कथायां मीमांसकस्य वेदविरोधोऽपसिद्धान्त एव, तीर्थिकेन सह कथायां सौगतस्य स्वागमविरोधवत्। अथोभयोरङ्गीकृतकणादाक्षपाद-प्रामाण्ययोस्तन्मतातिक्रमे कथम्? न कथञ्चित्। अविप्रतिपत्तौ कथाया एवा-प्रवृत्तेः विप्रतिपत्तावुभयप्रामाण्याभ्युपगमपरित्यागात्। तद्विरुद्धदर्शनान्तरमाश्रित्यैव हितवादप्रवृत्तिर्नान्यथेति। अस्फूर्त्तिदशायामस्मन्मतानभिज्ञोऽयमिति वाद्यवज्ञानात् अन्यथा व्याख्यास्यामीति सौटीर्यात् एकदेशिमतं तदिति वैयात्यात् साक्षान्नोक्तमिति व्यामोहाच्चोक्तिसम्भवः। न हि शास्त्राश्रया वादा भवन्तीति नापसिद्धान्तो निग्रहाधिकरणमित्येके। तन्न। शास्त्रमनाश्रित्य तदनुगुणकथारम्भानुपपत्तेः। यदा हि बौद्धः क्षणभङ्गसाधने प्रयुक्ते अस्फूर्त्तिमता नैयायिकेन सिद्धसाधनमुद्भाव्य निगृह्यते तदा किं कुर्यात्? प्रथमविप्रतिपत्तिविरोधमुद्भावयेदिति चेत्, एवं तर्हि विप्रतिपत्त्यनुगुणप्रमेयान्तरव्यतिक्रममप्युद्भावयेदेव अविशेषात्। अन्यथा विप्रतिपत्तिव्यतिक्रममप्युपेक्षेत। न खलु तत्तदनुगुणप्रमेयान्तरव्यतिक्रमयोर्विरोधो-पपत्तिं प्रति कश्चिद्विशेषः। न चैकपुरुषार्थानुगुणाङ्गाङ्गिभावव्यवस्थितपदार्थजात-व्युत्पादनादन्यच्छास्त्रं नाम तस्मात् क्षणिकत्वस्वीकारे तदनुगुणापोहादिसमस्त-

---

साम्प्रदायिकाः। अविप्रतिपत्ताविति। यद्यपि नैयायिकवैशेषिकयोः कथायां क्षित्यादि अकर्त्तृकत्वाङ्गीकारेऽपि नापसिद्धान्तः स्यात्; न च तत्रागमविरोध एव, अप-सिद्धान्तलक्षणस्यापि भावात्, मात्रपदान्तर्भावने च लक्षणवैयर्थ्यापातात्; तथाप्यु-भयसिद्धैकागमविरोधेनागमविरोधो भवति। न चात्र तथेत्याशयः। साक्षान्नोक्तमिति। सूत्रकारादिभिरिति शेषः। अतो नोपेतसिद्धान्त इति। भ्रमो व्यामोहः। सौगत मतमुत्थापयति—न हीति। दोषान्तरसत्त्वेऽपि तदनुद्भावने हेतु'रस्फूर्तिमते'ति। किं कुर्यादिति। अपसिद्धान्तोद्भावनं विनेति शेषः। तूष्णींभावे त्वप्रतिभया पराजय-प्रसङ्गादित्यर्थः। कृत्यान्तरं शङ्कते—प्रथमेति। पूर्वापरव्याघातलक्षणं निग्रह-स्थानान्तरमेवोद्भावयेदित्यर्थः। तर्हि विरोधविशेषात्तदनुगुणवस्त्वन्तरव्यतिक्रममप्युद्-भावयेदिति परिहरति—एवं तर्हीति। तदेवोपपादयति—न खल्विति। यथा स्थैर्यं त्यज्यतो विरोधस्तथा स्थैर्यानुगुणप्रत्यभिज्ञाप्रामाण्यमपि त्यजत इत्यर्थः। तदनु-गुणेति। ननु तदनुगुणाभ्युपगमावश्यकत्वे मानासम्भवः। न चोपायानभ्युपगमे उपेयाभ्युपगमो सम्भवी उपायत्वापरिचयेऽप्यविरोधात्। न चानुगुणाङ्गीकारेऽपि शास्त्रा-श्रयणमावश्यकम्। न हि शास्त्रे सर्व एव शास्त्रार्थः परस्परमुपोद्घातवानेव किन्त्व-विरोधिमात्रम्। न हि शब्दानित्यताभ्युपगन्तुर्द्वित्वादेरपेक्षाबुद्धिव्यङ्ग्यत्वाङ्गीकारे तद

स्वीकारः, तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति परमेश्वरोऽपि नान्यथाकरणक्षमः। न च समस्ततदनुगुणपदार्थजातं कथारम्भे स्वशब्देनाभिधातुमुचितं तदेव शास्त्रप्रणयनप्रसङ्गात्, परिषदनपेक्षितत्वाच्च। न च तस्यातिक्रमोद्भावनाय समस्ततदनुगुणोहः परस्परशास्त्रमनाश्रित्य शक्यः। न च तदनुगुणव्यतिक्रमे तदुपेक्षणे वा तत्त्वप्रतिपत्तिजयावित्यकामेनापि तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयमिति ॥ २३ ॥

---

भ्युपगमो विरुद्धयत इति न तत्रापसिद्धान्तः स्यात्। किञ्च, शास्त्रविशेषमनाश्रित्याव्युत्पन्नानां तदनुगुणोहः सम्भवति। अथ कथातत्पूर्वं स्वीकृतस्य कथायां त्यागोऽपसिद्धान्तः कथातः प्रागभ्युपगमस्यावश्यं वाच्यः, समयबन्धं विना कथायामप्रवृत्तेः। न चैवं हेत्वाभासाभिधानमपसिद्धान्तः स्यात्। न हि भ्रमाद्धेत्वाभासं वदन्नपि हेत्वाभासस्यानिर्वचनीयत्वाभ्युपगमं जहातीति। तन्न। शब्दोऽनित्यः श्रावणत्वादिति शब्दत्वेऽनैकान्तिकत्वोद्भावने तन्नित्यत्वं परिहरतोऽपसिद्धान्ताभावप्रसङ्गात्। न हि शब्दानित्यत्वकथायां शब्दत्वनित्यत्वस्वीकारः प्राक् समयविषयः। अत्र वदन्ति—तत्तत्कथायास्तत्तत्फलनिश्चयं विना कथायामप्रवृत्त्या सभ्यानां कथायाश्च तन्निश्चयो वाच्यः। स च प्रतिव्यक्ति न सम्भवति आनन्त्यादिति सामान्यत एवाभ्युपेयः। तत्र प्रमाणतद्विषयस्याशक्यत्वात् तदानीं परिषदनपेक्षितत्वाच्च तच्छब्दानित्यत्वादिषु सामान्यादिषु सामान्यान्तरस्य चाननुगततदनुगुणेषु तेषु तेषु पदार्थेषु चासत्त्वादनन्यगत्या शास्त्रपरिग्रह एव कर्तव्यः। तथा च स्वाभ्युपगतविरोधस्यापि दूषकत्वं तथापि तदनुगुणमात्रविरोधो दूषणम्। शास्त्रव्युत्पादितविरोधस्तु कथमिति चेत्, सर्वस्यैव शास्त्रप्रतिपाद्यस्य दृष्टान्तत्वादिना यथाकथञ्चिदनुगुणत्वात्। विशिष्य समयबन्धस्याशक्यत्वे सामान्यतस्तत्प्रतिपाद्यत्वेन तस्यापि विषयीकरणात्। अत एवोपायत्वापरिचयेऽप्युपेयाभ्युपगम इति निरस्तम्। अप्रतीत्यन्यथानुपपत्त्योपायत्वनिश्चयस्यावश्यवाच्यत्वात्। अथोभयोद्भावनेऽपि प्रकृते किमायातमित्यत आह—न चेति। अपि वा समस्तरूपेणाभिधानमशक्यम्। तद्धेतोस्तावद्रूपेण ज्ञानस्यैवाशक्यत्वादित्यत आह—[1]न च तद्व्यतिक्रमेति। न चेति। तदनुगुणव्यतिक्रमेण तदुपपत्तिस्तदुपलक्षणे (?) वाऽनन्वय इति यथासंख्यमन्वयः। यत्तु दूषणमपसिद्धान्तलक्षणे सिद्धान्तविपरीताभ्युपगमशब्देनैकसिद्धान्तविपरीतमभ्युपगच्छतोऽपरस्यापसिद्धान्तापत्तिरिति। तन्न। कथकाशक्तिसूचकत्वरूपनिग्रहस्थानसामान्यलक्षणानुवृत्तेरेव तन्निर्वाहावगमात्; लाघवात्, व्यक्तिवचनानां सन्निहितविशेषपरत्वाच्चेति सम्प्रदायः ॥ २३ ॥

---

1. NP. Text, 'न च तस्यातिक्रम०'.

## [1]हेत्वाभासाश्च यथोक्ताः ।

तथैव निग्रहस्थानमिति शेषः । शेषं भाष्यादौ । अनुक्तसमुच्चयार्थश्चकारः । विरोधादिनिग्रहस्थानोत्तीर्णस्य हि साधनप्रयोगस्य चतुर्द्धा दुष्टत्वं सम्भवति । हेतुतो यथा अनैकान्तिकमित्यादि । दृष्टान्ततो यथा साधनविकलमित्यादि । तर्कतो यथा आत्माश्रयेतरेतराश्रयादि । उक्तितो यथा अनुपदर्शितान्वयविपर्ययोपदर्शितान्वयादि । तत्र स्वशब्देन प्रथमविधायामुपात्तायामनुक्तत्रयमपि निग्रहस्थानत्वेन व्यवहर्त्तव्यमिति चकारार्थः । अथ पृथगेव कस्मादेतत् सूत्रकृता नोच्यते, तथा सति गौरवमापद्येत किं नाम शिष्याश्च सुतरामनुकूलिता भवेयुः ? सत्यम्, हेत्वाभासानामेवैष विचारतः प्रपञ्च इति प्रतिपादनार्थन्तु पृथगनुपादानम् । कथं साधनविकले हि दृष्टान्ते असाधारणो हेतुः स्यात् , साध्यविकले च विरुद्धः, उभयविकले व्याप्यत्वासिद्धः, तथा आश्रयासिद्धेऽपि साध्याव्यावृत्तेरसाधारण्यं साधनाव्यावृत्तेर्विरोधः उभयाव्यावृत्ते व्यतिरेकव्याप्तेरसिद्धिः, आश्रया-

---

तथैवेति । यथा येन प्रकारेण उक्ता लक्षितास्तथा तेनैव प्रकारेण निग्रहस्थानानि, तथैव येन रूपेणासिद्धत्वादिना तेषां हेतुदूषकत्वमुक्तं तदेव रूपं पुरस्कृत्य हेत्वाभासप्रयोक्तृतया कथकाशक्त्युन्नयनमपीति सूत्रार्थ इत्यर्थः । यद्यपि विप्रतिपत्त्यप्रतिपत्त्युन्नायकत्वेन निग्रहस्थानत्वम् , न च तेन रूपेण ते लक्षितास्तथापि हेत्वाभासाभिमतस्योद्देश्यानुमितिप्रतिबन्धकं यथार्थज्ञानविषयत्वमेव रूपमत्र विवक्षितम् । अत एव, हेत्वाभासस्तर्हि दुरूहतया पृथक् परीक्ष्यतामित्यपेक्षायामिदं सूत्रं तथैव परीक्षिता इति च शेषो वक्तव्यः । तेन यथोद्दिष्टा लक्षितास्तथेत्यर्थः । परीक्षा च "[2]यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्ग' इत्यनेन कृतेति "रत्नकोष"कृतः । तदपास्तम् । अत्रोद्देशपरीक्षोत्कीर्त्तनेन प्रयोजनाभावाच्च अव्यापकत्वमाशङ्क्याह—अनुक्तेति । विरोधादीति । स्थापनावाक्योच्चारणानुपदमेव प्रतिज्ञाहान्यादेरुद्भावनावसराभावाद्विरोधस्य वस्तुदोषत्वेन प्राधान्याच्च प्रतिज्ञाहान्याद्युपेक्ष्य 'विरोधादी'त्युक्तम् । अन्वयदृष्टान्तमधिकृत्याह—साधनविकले हीति । यद्यपि क्षितिकर्त्ताऽभिधेयः क्षितिकर्तृत्वाच्चैत्रवदित्यत्र साधनविकलविपक्षाभावेनासाधारण्यं तथापि व्यतिरेकिधर्मसाध्याभिप्रायेणायं ग्रन्थः । न च यत्रायोगोलकमहानसयोरुपन्यासस्तत्र धूमवत्त्वस्य नासाधारणमयोगोलपक्षव्यावृत्तेरभावादिति वाच्यम् ; तत्राधिकस्यैव निग्रहस्थानत्वादिति भावः । दृष्टान्तधर्मिणोऽसिद्धाः आश्रयासिद्धेऽपीति । तथा व्याप्यत्वासिद्धिरित्यर्थः । व्यतिरेकमधिकृत्याह—साध्याव्यावृत्तेरिति । आश्रया-

---

1. NS. 5. 2. 24 ; 2. NS. 2. 1. 7.

सिद्धेऽपि तथा, आत्माश्रयपरस्पराश्रये चक्रकवृत्तौ चासिद्धिः, अनवस्थायामसिद्धिः, अनैकान्तिकत्वं वा कालात्ययापदेशो वा अनिष्टप्रसङ्गे व्याप्त्यसिद्धिः, तथानुकूलतर्काभावेऽपि, दुरुक्तौ तु वस्तुतोऽर्थस्य हेतोः शोभनत्वेन उक्त्यनुसारेण दुष्टत्वमेव। अनुपदर्शितस्य सतो हेतुरूपस्यागमकत्वात्। यथावचनञ्च तस्य रूपस्याप्रतीतेरिति। तर्हि चकारेणापि समुच्चये अस्यार्थस्य क्व उपयोगः, सिद्धत्वात्? न, नह्यमीषां हेतुदूषणपर्यवसायित्वेन समुच्चयः, किन्तु पृथगुद्भाव्यत्वेन विशदप्रतिपत्तिकत्वात् प्रतिज्ञाविरोधवत्। तस्मादमीषां हेत्वाभासप्रपञ्चत्वात् पृथगनुपादानम्। पृथगुद्भाव्यत्वाच्च चकारेण समुच्चितत्वमिति। तर्हि प्रतिज्ञाविरोधादयोऽपि पृथगनुपादेयाः हेत्वाभासप्रपञ्चत्वाच्चकारेण समुच्चेयाश्च पृथगुद्भाव्यत्वादित्यस्तु, न तेषां दूषणेऽपि सम्भवेनासंकीर्णोदाहरणसम्भवात्। अत्रापि तर्हि दूषणेऽपि प्रतिकूलतर्काः सम्भवन्तीति पृथगेव वक्तव्याः? सत्यम्, उक्ता एव ते ये तत्र सम्भविनः सूत्रैरेव जात्युत्तरप्रपञ्चनादिति ॥ २४ ॥

---

सिद्धेऽपीति। दृष्टान्तधर्मे एवासिद्धः, तथा व्यतिरेकव्याप्त्यसिद्धिरित्यर्थः। दृष्टान्ततोऽसिद्धिदुष्टत्वमुदाहृत्य तर्कतो दुष्टत्वमुदाहरति—आत्माश्रय इति। पक्षनिष्ठे आश्रयासिद्धेः हेतुनिष्ठे स्वरूपासिद्धिः। दृष्टान्तनिष्ठे दृष्टान्तासिद्ध्या व्याप्यत्वासिद्धिरित्यर्थः। अनवस्थायामिति। आद्यस्याव्यवहिततावत्प्रवाहापेक्षित्वे तस्य प्रागसिद्ध्या आश्रयासिद्धिः। अथाद्यो व्यवहितप्रवाहापेक्षद्वितीयापेक्षी न भवति, तदा आद्यस्य पक्षत्वे समवायापेक्षित्वे साध्ये बाधः। अपक्षत्वे चानैकान्तिकमित्यर्थः। तथेति। व्याप्यत्वासिद्धिरित्यर्थः। उक्तितो दुष्टत्वमुदाहरति—दुरुक्ताविति। तर्हीति। हेत्वाभासान्तर्गतत्वेनैव निग्रहस्थानपर्यवसानादित्यर्थः। पृथगिति। स्वरूपेणोपग्रहेऽपि प्रातिस्विकरूपोद्भावनार्थं समुच्चयः। प्रतिज्ञाहान्यादीनां तु हेत्वाभासशून्यत्वमप्युदाहरणमस्तीति ते पृथगुक्ता न समुच्चिता इति भावः। दूषणेऽपि तेषां सम्भवात् न नियमेन हेत्वाभासपर्यवसायिता, स हि दूषणाभिधानस्यापि प्रयोगरूपत्वं जातीनां तन्नियमेन हेत्वाभासपर्यवसायितयापि स्वव्याघातकत्वेऽपि नातिजन्यत्व(?)ज्ञापनाय प्रपञ्च इति प्रघट्टकार्थः। विशदेति। दूष्यगतसिद्ध्यौपयिकरूपवैराग्यात्मकत्वादित्यर्थः। प्रतिज्ञाविरोधवदिति। प्रतिज्ञाविरोधादिवच्चक्रादेरपि विप्रतिपत्तिसूचकत्वादिति भावः। तत्रेति, दूषणे; तथापि पृथगभिधेयत्वेन प्रतिज्ञाहान्यादिवत् विभागसूत्रे किमिति नोक्ता इत्यत आह—सूत्रैरिति। सूचनमात्रकारी सूत्रकारो न नियोज्य इत्यर्थः। अत्र केचिदाहुः—प्रत्यक्षागमाभासयोर्निग्रहस्थानत्वसूचनार्थश्चकार इति। तन्न। तयोः कथायामनु-

लक्ष्यं लक्षणमुत्थितिः स्थितिपदं मूलं फलं शातनं
जातीनां सविशेषमेतदखिलं प्रव्यक्तमुक्तं रहः ।
तद्वन्निग्रहसंहतेरपि गतिर्विस्पष्टमावेदिता
यस्मिन्विस्तरभीरुभिर्गुरुतरैरालस्यमध्यासितम् ॥ १ ॥
गम्भीरेऽस्मिन्नयजलनिधौ सन्ति रत्नानि भूयो
येषामेषा कतिपयपदा लेशदृष्टान्तलक्ष्मीः ।
धीश्रीहीने जगति बहुलं ग्राहको नास्ति यस्या-
स्तस्याः कष्टं क नु परिणतो यः परीक्षां विदध्यात् ॥ २ ॥

इति श्रीन्यायाचार्य-श्रीमदुदयनकृतौ बोधसिद्धिनाम्नि न्यायपरिशिष्टे पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥ समाप्तश्चायमध्यायः ॥

---

मानच्छाययैवोपन्यास इति सिद्धान्तात् । तथात्वे च हेत्वाभासपदेनैव तत्संग्रहादिति सर्वमवदातम् ॥ २४ ॥

अध्यायार्थं सङ्कलय्याह - लक्ष्यमिति । उत्थितिर्जन्म । स्थितिपदमाश्रय-स्थापना । मूलं कारणपददर्शनादि उक्तिसम्भवप्रयोजकप्रदर्शनेन । फलं साम्या-पादनादि । शातनं दुष्टत्वप्रयोजकरूपप्रदर्शनेन निराकरणम् । रह एकदेशे प्रथमाह्निक इति यावत् । उत्तरत्रापि रहो द्वितीयाह्निके । निग्रहसन्ततेरपि सन्ततिः सङ्गतिः प्रकारो विस्पष्टमावेदिताऽध्याय इत्यर्थः । १ ।

गम्भीर इति । गम्भीरे दुर्बोधे नयजलनिधौ भूयो रत्नानि सन्ति, तेषां माता लक्ष्मीः पर्यन्तकल्पा कतिपयपदा कतिपयस्थाना । एषा लेशदृष्टा भागदृष्टा, अन्तनु(अनन्त ?)सम्पदो दुर्विज्ञानत्वात् । धीश्रीहीने बुद्धिसम्पद्धीने जगति यस्याः परीक्षाया ग्राहको नास्ति तां परीक्षां यस्या लक्ष्म्या यो विदध्यात् स कः परिणतः प्राप्तबुद्धिपरिणामोऽपि नास्तीत्यर्थः । २ ।

यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्यात्मजोऽतिविषमं परिशिष्टमित्थं प्राकाशयत् कृतिमुदे बुधवर्द्धमानः ॥ १ ॥

महात्मानः कतिपये विकला एव ते भुवि ।
स्वल्पैरप्यन्यविज्ञानैर्निर्भरानन्दमेदुराः ॥ २ ॥

इति परिशिष्टे वर्द्धमानप्रकाशः ॥ समाप्तोऽयं ग्रन्थः ॥

तर्कवागीशनाम्ना यः प्रथितोऽवनिमण्डले ।
सुधीभिर्माधवश्चन्द्रो वाक्चिवंशप्रभाकरः ॥
नरेन्द्रेणास्य पुत्रेण प्रकाशितं सतां मुदे ।
परिशिष्टं प्रकाशश्च प्रीयतां माधवेश्वरः ॥

